आर.एन.आई. सं.58951/94

ISSN 0975 - 0061

# आरण्यकम्

## अर्धवार्षिकी सन्दर्भिता संस्कृतशोधपत्रिका
## (Bi-annual Refereed Sanskrit Research Journal)

विश्वविद्यालयानुदानायोगस्य( UGC )यत्नसूच्याम्( Carelist )अन्तर्भुक्ता

संस्कृतप्रसारपरिषद्

आरा (विहारः)



एकत्रिंशं वर्षम्-द्वितीयोऽङ्कः

सितम्बर 2023

# 'आरण्यक'स्य नियमाः

1. संस्कृतप्रसारपरिषद्, आरा-पक्षत इदं षाण्मासिकी शोधपत्रिका संस्कृतेन चैत्र-आश्विनमासयोः (मार्च-सितम्बर) प्रकाश्यते। वर्षारम्भः चैत्रात् (मार्च तः)मन्यते।
2. ग्राहकत्वं पूर्णवर्षस्यैव स्वीक्रियते। मध्येवर्षं ग्राहकत्वं काङ्क्षतः पूर्णवर्षस्य शुल्कमपेक्ष्यते। तादृशाय ग्राहकाय वर्षस्य पूर्वप्रकाशितोऽङ्क उपलब्धौ सत्यां प्रेषयिष्यते।
3. वार्षिकं शुल्कम् एकशतं (100) रूप्यकाणि। एकस्याङ्कस्य शुल्कम् पञ्चाशत् (50) रूप्यकाणि।
4. आजीवनं ग्राहकताशुल्कं द्विसहस्रं (2000) रूप्यकाणि।
5. शुल्कप्रेषणस्योपायाः-

   **(i) NEFT Banking**

   Bank - Indian Bank, Ara (Bihar)
   IFSC - IDIB000A047
   Name - Sanskrit Prasara Parishad
   Acc. No. - 552203784

   शुल्कं संप्रेष्य तस्य सन्देशसूचना (Message) अत्र देया-
   डॉ. नीलमणि पाठकः, दूरभाषः 8102327064
   Email-**nilmanipathak19@gmail.com**

   **(ii) बैंक ड्राफ्ट 'संस्कृतप्रसारपरिषद्'** इति नाम्ना
   आरा (बिहार) नगरे व्यवहरणीयम्।
   **ड्राफ्ट प्रेषणस्थलम् -** डॉ. नीलमणि पाठकः, गणपति ज्वेलर्स के पीछे, महावीर स्थान, मौलाबाग, आरा (विहार)-802301
6. आरण्यकस्य बेबसाईट-**www.aranyakam.in**
7. विमर्शात्मका अनुसन्धानात्मकाश्च शास्त्रीया अप्रकाशितपूर्वा उच्चस्तरीया गम्भीराश्च मौलिका निबन्धाः प्रकाशनाय गृह्यन्ते।
8. काव्य-नाटक-चरित्रवर्णन-व्यङ्ग्य-हास्यसम्बद्धा नव्या रचना अत्र स्थानं न लभन्ते।
9. प्रकाशनाय प्रेषिताः सर्वविधा रचनाः शुद्धा एकस्मिन् पत्रपृष्ठे सुस्पष्टाक्षरैः लिखिताः टङ्किता वा स्युः। रचनाऽन्ते रचयितुः आवाससङ्केतः पदनिर्देशः ई-मेल संकेतः, दूरभाषसंख्या च उल्लिखिताः स्युः।
10. प्रकाशितसंस्कृतकाव्यनाटकाऽऽलोचनादिग्रन्थानां समीक्षार्थं सम्बद्धग्रन्थस्य प्रतिकृतिद्वयं सम्पादकं प्रति प्रेषणीयम्।
11. लेखकेभ्यः तत्प्रकाशितलेखानां पञ्च प्रतिरूपाण्यपि दीयन्ते।
12. लेखानां प्रकाशनस्य सम्पादनस्य च सर्वाधिकारः सम्पादकाधीनः।
13. 'आरण्यक'सम्बद्धा सर्वविधा जिज्ञासा
    **प्रो. गोपबन्धु मिश्रः, संस्कृतविभागः, काशीहिन्दूविश्वविद्यालयः, वाराणसी (उ.प्र.)-221005 इति सङ्केतेन** (चल.) 9450870788 विधेया।
    Email-**gopabandhuh@gmail.com**
14. शोधलेखसम्प्रेषणं तत्सम्बद्धपत्रव्यवहारश्च
    Email-**aranyakam94@gmail.com** इति सङ्केतेन विधातव्यः।

# आरण्यकम्

संस्कृतप्रसारपरिषदः अर्धवार्षिकी सन्दर्भिता संस्कृतशोधपत्रिका

विश्वविद्यालयानुदानायोगस्य( UGC )यत्नसूच्याम्( Carelist )अन्तर्भुक्ता


वर्षाङ्कौ - एकत्रिंशं वर्षम् - द्वितीयोऽङ्कः

**आश्विनः, वि.सं.२०८०**

**सितम्बर २०२३**






**प्रतिवर्षं प्रकाशनकालः**
**चैत्रः, आश्विनः-विक्रमाब्दः**
**मार्च, सितम्बर**

*प्रत्यङ्कम् - 50 रूप्यकाणि* *वार्षिकं शुल्कं 100 रूप्यकाणि*

*संयुक्ताङ्कः - 100 रूप्यकाणि*

**परामर्शदात्री समितिः**

डॉ. उमाशङ्कर शर्मा 'ऋषिः', पटना

डॉ. राय अश्विनी कुमारः, बोधगया



संस्थापकः

**स्व. पण्डित व्रजभूषण मिश्र 'आक्रान्तः'**




सम्पादकः

**प्रो.गोपबन्धु मिश्रः**

वरिष्ठ आचार्यः, संस्कृतविभागः

काशीहिन्दूविश्वविद्यालयः, वाराणसी

पूर्वकुलपतिः

श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम् (गुजरात)

gopabandhuh@gmail.com





सह-सम्पादकौ

**डॉ. सञ्जय कुमार चौबे**

sanjaychaubey.lbs@gmail.com

**डॉ. सुनीलकुमार प्रधानः**

sunilkumarp435@gmail.com





प्रकाशिका

**संस्कृतप्रसारपरिषद्**

रामेश्वरलीलासदनम्

महावीरस्थानम्

मौलाबाग, आरा (विहारः) 802301





संस्कृतप्रसारपरिषद्, आरा पक्षतः प्रो. गोपबन्धु मिश्रेण, दी महावीर प्रेस, बी.20/44, भेलूपुर, वाराणसी इत्याख्ये मुद्रणालये मुद्रितं प्रकाशितं च।

**प्रो. गोपबन्धु मिश्रः**

सम्पादकः

# सम्पादकीयम्

**अयं निजः परो वेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्॥**

इति सुभाषितं निशम्य गणनाविषयिणी मानवी वृत्तिः ध्यानपथम् आगता। मानवजीवने गणनायाः कियद् वा महत्त्वं नास्ति? लघुचेता भवतु उत उदारचरितः, तेन गणना तु क्रियते। गीतायामपि समबुद्धेः वैशिष्ट्यं वक्तुकामेन भगवता–

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते॥** (गीता 6.9)

इति सुहृदादीनां परिगणनं कृतम्।

मेघदूते कान्ता यक्षी यक्षस्य वर्षभोग्यस्य शापस्य शिष्टान् दिवसान् अवश्यमेव गणयन्ती भवेदिति अतीव विश्वासेन यक्षः सन्देशवाहकं मेघं वदति –

**तां चावश्यं दिवसगणनातत्पराम्।** (पूर्वमेघः 10)

किं च सन्देशमुखेन अभिशापस्य चत्वारो मासा एव अवशिष्टा इति स्वयमेव यक्षः गणनाविषयकं स्वकीयं मतं पोषयति–**शेषान् मासान् गमय चतुरः।** (उ.मेघः46)

न केवलं संख्यावाचकविशेषणैः विशिष्टस्य गणना क्रियते, अपितु मनोभावा अपि गण्यन्ते, तद्यथोक्तमस्ति –

**मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम्।**

मनोगतस्य दुःखस्य सुखस्य वा गणनं कया रीत्या कर्तुमत्र उद्दिष्टमस्ति– तस्याऽऽकलनं सुकरं नास्तीति अवगम्यते, यतो हि यत्र संख्या विशेषणत्वेन विद्यमाना भवति, तस्य विशिष्टस्य एकम्, द्वे, त्रीणि इत्येवं क्रमेण गणनं कर्तुं शक्यते, किन्तु यत् सुखदुःखादि अन्तरङ्गं सूक्ष्मं च तत्त्वम्, तस्य गणनं कथं वा भवितुमर्हति?

गणनाया अतीव विचित्रः प्रयोगः प्राचीनकालादेव दृश्यते। ऋग्वेदस्य पुरुषसूक्ते–

**सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमिं विश्वतो वृत्वातिष्ठद्दशाङ्गुलम्॥** (ऋग्वेदः 10.90.1)

इत्यत्र सर्वप्राणिसमष्टिरूपस्य ब्रह्माण्डदेहस्य विराडाख्यस्य पुरुषस्य शीर्षाणाम् अक्ष्णां पादानां च प्रत्येकं सहस्रसंख्यात्वं केन गणितम्? अतोऽत्र सहस्र इति

संख्यावाचकशब्दस्य प्रयोगे तात्पर्यम् उररीकृत्य आचार्यः सायणो ब्रूते– ''सहस्रशब्दस्योप-लक्षणत्वाद् अनन्तैः शिरोभिर्युक्तः इत्यर्थः।''

अर्थात् अपरिगणनीयत्वे असीमत्वेऽनन्तत्वे वा सति सहस्रशब्देन तदुल्लेखः क्रियमाणो दृश्यते। एवमेव –

**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।**
**दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि॥**

इति देव्याः क्षमापनस्तोत्रे सहस्रशब्दः प्रयुक्तः।

संख्यावाचकः 'शत'शब्दोऽपि बहुधा अगणनीयत्वं सूचयतीव, तद्यथा देवीक्षमापन-प्रसङ्गे –

**अपराधशतं कृत्वा जगदम्बेति चोच्चारयेत्।**
**यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः॥**

महतो देवस्य शब्दस्वरूपस्य मर्त्यान् प्रति आविष्टस्य स्वरूपम् आख्यातुं महाभाष्यकारः वैदिकमन्त्रममूमुपन्यस्यति –

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥**

(ऋग्वेदः, 4.58.3)

अत्र ''चत्वारि शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः = त्रयः काला भूतभविष्यद्वर्तमानाः, द्वे शीर्षे = द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्त हस्तासो अस्य = सप्त विभक्तयः। त्रिधा बद्धः त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति।'' इति चत्वारि, त्रीणि, द्वे, सप्त इति प्रतिसंख्यं शब्दवृषभस्य अङ्गवैशिष्ट्यं विवृणोति महाभाष्यकृत्। अर्थात् गणनायां प्रतिसंख्यं तद्विशिष्टस्य अङ्गस्य एकैकशः उल्लेखेन अत्र गणना सुव्यवस्थिता युक्तिसङ्गता लोकपरिगणनधर्माश्रितेति वैशिष्ट्यं द्रष्टुं शक्यते।

मुण्डकोपनिषदि –

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥** (मुण्ड. 3.1.1)

इति मन्त्रे एव द्वयोः पक्षिणोः एकैकशः स्वभावं वर्णयित्वा द्वि–संख्यायाः याथार्थ्यं दर्शितमेवास्ति।

एवंप्रकारेण तैत्तिरीयोपनिषदि अधिलोकम् अधिज्यौतिषम् अधिविद्यम् अधिप्रजम् अध्यात्मम् इति पञ्चाधिकरणानि सावयवानि यथासंख्यं विवृतानि सन्ति।

महाकवेः कालिदासस्य प्रशस्तिसन्दर्भे कवीनां गणनाविषय एवम् उल्लिखितो

विद्यते –

**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**
**अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥**

अत्र कवीनां गणनाम् एकैकशः कः कुर्वन् प्रभवति स्म, किं च कालिदासात् परं तादृशगणनाप्रसङ्गे पञ्चस्वङ्गुलीषु अनामिकायाः सार्थक्यं केन विनिश्चितम् इति विनिश्चेतुमशक्यमिति हेतोः कवेः प्राशस्त्यं मनसि निधाय किं च पञ्चानामङ्गुलीनां सामान्यतः लौकिकगणनाकर्मणि भूयिष्ठप्रयोगं विविच्य एतादृशम् आभाणकं प्रस्तुतमिति कथयितुं शक्यते।

किन्तु वेदाङ्गं व्याकरणं शब्दानां सूत्राणां वा गणनाविषये सम्यक् सावधानमिति प्रतीयते। अष्टाध्याय्याः अष्टमाध्यायस्य द्वितीयपादस्य प्रारम्भे विद्यमानं सूत्रं ''पूर्वत्रासिद्धम्'' (अ.8.2.1) विवृत्य भाष्यकारः 'पूर्वत्र' इत्यस्य पदस्याधारेण इतः प्राक् उक्तानां सूत्राणामनुक्रमं 'सपादसप्ताध्यायी' अर्थात् सप्त अध्यायाः किं च अष्टमाध्यायस्य प्रथमः पादः इति समाहार इति ब्रूते – '**येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पदोनोऽध्यायोऽसिद्धो वेदितव्यः।**' इति।

किं च 'इको यणचि' (अ. 7.1.76) इति इकः यणादेशे, 'एचोऽयवायावः' (अ. 6.1.77) इति एचः स्थाने अय्-अव्-आय्-आव् इति आदेशविधाने 'यथासंख्यमनुदेशः समानाम्' (अ. 1.3.10) इति परिभाषया यथासंख्यं चतुर्णां स्थानिनां स्थाने चत्वारः आदेशाः यथाक्रमं विधातव्याः इति निर्देशः स्पष्टतया प्रवर्तते। तथा च 'सरूपाणामेकशेष एकविभक्तौ' (अ. 1.2.64), 'पुमान् स्त्रिया' (अ. 1.2.67), 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (अ. 1.2.68), 'पिता मात्रा' (अ. 1.2.70) इत्यादौ एकशेषविधौ एकम् इति संख्यायाः शेषत्वं विनिश्चीयते।

'सर्वे देशान्तरे' इति वार्त्तिकं व्याख्याय महर्षिः पतञ्जलिर्यदा शब्दस्य महान्तं प्रयोगविषयं विवृणोति, तदा गणनापूर्वकं वसुमत्याः भौगोलिकीं व्यापकतां तथा च शब्दप्रयोगस्य विषये विशालं ज्ञानक्षेत्रं संख्योल्लेखपूर्वकम् उपस्थापयति, तदित्थमस्ति–

''उपलब्धौ यत्नः क्रियताम्। महाञ्शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती, त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बह्वृच्यम्, नवधाऽऽथर्वणो वेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः।'' (महाभाष्यम्, पस्पशाह्निकम्)

अत्रेदमवधेयं यत् अत्र सामवेदस्य शाखासंख्या या 'सहस्रम्' इत्युक्ताऽस्ति,सा इतरयजुर्वेदादीनां प्रसङ्गे इव महर्षेः पतञ्जलेः समये उपलभ्यमाना आसीदिति अत्र सहस्रशब्दः न प्रशस्तिवाचकोऽपि तु साक्षात्संख्यावाचक इति विमर्शनीयम्।

**त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः।**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा॥** (पाणिनीयशिक्षा 3)

इत्यादिषु शिक्षाग्रन्थेषु वर्णानामपि गणना एकैकशः स्पष्टतया क्रियमाणा दृश्यते। ज्योतिषाख्यं वेदाङ्गं च सम्पूर्णतया ग्रहनक्षत्राणां समष्टिशः व्यष्टिशः किं च व्यष्टौ अपि तद्भागशः गणनायामेव आश्रितम्। छन्दःशास्त्रे वार्णच्छन्दसां गणना तु यमतादिगण-व्यवस्थाश्रिता इति तत्र इतस्ततः एकस्यापि वर्णस्य अव्यवस्थितता अनस्वीकार्या एव।

भारतीयदर्शनेषु पञ्चविंशतिं तत्त्वान्येव स्वीकुर्वाणं सांख्यदर्शनमस्ति। वेदान्तेषु पञ्चीकरणप्रक्रिया प्रमुखा विद्यते। तत्र अधिकारिविवक्षायां शमादिषट्कसम्पत्तेः चर्चा महीयते। प्रत्येकं दर्शनं प्रत्यक्षानुमानोपमानशब्दादिप्रमाणानाम् एकं द्वयं त्रयं चतुष्टयं ततोऽप्यधिकप्रमाणं स्वीकर्तुं स्वतर्कं दर्शयत्येव। ब्रह्म, जीवः, संसारः इत्यादि आश्रित्य अद्वैत-द्वैत-द्वैताद्वैत-विशिष्टाद्वैतादिदर्शनानि विकसितानीति वयं तत्तदेकद्विसंख्या-धारितान् तर्कान् विमृशामः।

भारतीयपरम्परायाम् एकमेवाद्वितीयं ब्रह्म इति एकत्वं, जीवब्रह्मणोः द्वैतत्वम्, ब्रह्मविष्णुमहेशाः इति त्रयो देवाः, सत्त्वरजस्तम इति त्रैगुण्यम्, वेदा इव चतुर्मुखः ब्रह्मा, त्रिनेत्रः शिवः, पञ्चवक्त्रः पञ्चाननो वा शिवः, षडाननः कार्तिकेयः, अत्र्यादयः सप्त ऋषयः, सप्ताश्वः सूर्यः, अष्ट वसवः, महाकवेः कालिदासस्य वर्णनानुसारं ('या सृष्टिः' इति अभिज्ञानशाकुन्तलस्य मङ्गलश्लोके) ईशस्य प्रत्यक्षाः अष्ट तनवः, नव ग्रहाः, नव रसाः, इत्यवंक्रमेण अगणितगणनाधारिताः देवादिगतधारणाः सुतरां प्रभवन्त्येव।

अतः भारतीयमनीषायां यद्यपि परमेश्वरः अखण्डः, अनन्तः अपरिमेयश्चास्ति किन्तु स एव 'एकं सद् विप्रा बहुधा वदन्ति' इति उक्त्यनुसारं भिन्नभिन्नसंख्याश्रितगणना-पद्धत्या बहुभिः उपायैः त्रिनेत्र-चतुर्मुख-चतुर्भुज-पञ्चवक्त्रादिरूपैः सुतरां स्तूयते पूज्यते गीयते चेति एषा भारतीयता आदिकालतः एतादृशं गणनाश्रितं वैविध्यं वितनुते एव।

'आरण्यकम्' इदं तद्बहुविधरूपताम् आश्रयमाणं विविधेषु शास्त्रेषु च ऊह्यमानं तत्त्वं समुपस्थापयितुं यतमानं विद्यते इत्येतद्विषये विद्वांसः शोधार्थिनश्च एव प्रमाणम्।

विदुषां वशंवदः
गोपबन्धु मिश्र
सम्पादकः
आरण्यकम्

# सूचीपत्रम्

***

# अभिज्ञानशाकुन्तले व्यभिचारिभावध्वनिः

**प्रो. श्यामानन्दमिश्रः**

काव्येषु रसाभिव्यञ्जनद्वारेण सहृदयहृदयेष्वतत्त्वपराङ्मुखीकरणपुरस्सरं तत्त्वप्रतिष्ठापनं यद्वा सदसद्विवेकोद्भावनमेव कवेर्मौलिकं प्रयोजनं भवतीत्यवधेयम्। सिद्धान्तप्रतिपादनक्रमे रसशब्दस्तु भावतदाभासादीनामपि ग्राहकोस्तीति सुविदितमेवालोचकानाम्। उपलक्षणीभूतेन रसशब्देन ग्राह्येषु भावतदाभासादिषु यद्यपि व्यभिचारिभावादीनां निर्देशो न कृत आचार्यैस्तथापि काव्यविशेषे प्राधान्येनाभिव्यक्तिविषयीभूता यद्वा वाक्यार्थीभावं प्राप्तास्तत्तद्व्यभिचारिणः भाव-कोटिका एवाङ्गीकृताः। तदुक्तं काव्यप्रकाशकृता '**व्यभिचारी तथाञ्जितः भावः प्रोक्तः।**'[1] व्यभिचारिभावानां यत्प्राधान्येनाभिव्यञ्जनं दृश्यते तत्सर्वमपि व्यष्ट्यैव (एकदेशापेक्षयैव), समष्ट्या तु पुनस्तत्तत्प्रकरणविशेषानुरोधेन प्राधान्यमवाप्तस्य रसविशेषस्याङ्गत्वेनैवैषां व्यभिचारिणां स्थितिरित्यवधेयम्।

निर्वेदग्लानिशङ्काप्रभृतीनां व्यभिचारिभावानां यथावसरं प्राधान्येन व्यङ्ग्यत्वं यद्वा ध्वनित्वं वाल्मीकिव्यासभासादीनां काव्येष्वनेकधा द्रष्टुं शक्यते। कविकुलगुरोः कालिदासस्यापि कृतिषु निर्वेदादयो व्यभिचारिणः कथाप्रवाहे यथावसरं प्राधान्येनाभिव्यञ्जिता ध्वनिपदवीं लभमाना दृश्यन्ते। प्रस्तुतेऽत्र शोधनिबन्धे अभिज्ञानशकुन्तले विविधेषु स्थलेषु कथानुरोधाद् व्यभिचारिणां प्राधान्येन प्रकाशनं कथमिति प्रदर्शयितुं यथामति यत्न आधास्यते।

**निर्वेदः–** विपदीर्ष्यादिभिरात्मभर्त्सने क्षणिके मोहभङ्गे वा वर्तमानोऽयं भावविशेषो वैवर्ण्याश्रुनिःश्वासोच्छ्वासादिभिरनुभावैः प्रतीतिविषयीक्रियते।[2] अत्रेदमवधेयं यद् भावविशेषस्यास्य स्थायित्वं व्यभिचारित्वञ्चोभयरूपत्वमङ्गीकृतमाचार्यैर्भरतधनञ्जय-शार्ङ्गदेवविश्वनाथादिभिः। त्रयस्त्रिंशद्व्यभिचारिष्विदम्प्रथमतया किञ्च स्थायिभावानामनन्तरोक्त-त्वादतश्चोभयोर्मध्ये वर्तमानत्वाद्देहलीप्रदीपन्यायेनास्य ग्रहणमुभयत्र सञ्जायते, यदुक्तं सङ्गीतरत्नाकरकृता शार्ङ्गदेवेन '**पूर्वापरान्वयो ह्यस्य मध्यस्थस्यानुषङ्गतः।**'[3] निर्वेदोऽयं यदा सांसारिकविषयेषु तत्त्वातत्त्वविवेकाज्जायते तदा स्थायी यदा च इष्टानिष्टहानिलाभकृतस्तदा तु व्यभिचारीति कथ्यते –

**स्थायी स्याद्विषयेष्वेष तत्त्वज्ञानोद्भवो यदि।**
**इष्टानिष्टवियोगाप्तिकृतस्तु व्यभिचार्यसौ।।**[4]

व्यभिचारिणो निर्वेदस्य प्राधान्येनाभिव्यञ्जनमभिज्ञानशकुन्तलेऽत्र द्रष्टव्यम् –

**इतः प्रत्यादेशात् स्वजनमनुगन्तुं व्यवसिता**
**स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।**
**पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती**
**मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्।।**[5]

पद्येऽस्मिन् मोहात् प्रत्यादिष्टां शकुन्तलां मुद्रिकाप्राप्त्यनन्तरं स्मरतः दुष्यन्तस्य शकुन्तलाया दुरवस्थायामात्मनः कारणतां मत्वा 'मयि क्रूरे' इत्यादिना स्वावमानने शकुन्तलालम्बनकस्तन्निष्ठमुग्धत्वनिष्कलङ्कत्वाद्युद्दीपनकश्च निर्वेदो वैशद्येनाभिव्यज्यते। अत्र निःश्वासवैवर्ण्यात्मावमानननादयोऽनुभावाश्चिन्ताविषाददैन्यग्लानयश्च व्यभिचारिणः। इत्थमेव '**साक्षात् प्रियामुपगतामपहाय पूर्वम्**', '**संरोपितेऽप्यात्मनि धर्मपत्नी**'[6] इत्यादिष्वपि दुष्यन्तोक्तिषु स्वधिक्करणाद्यनुभावानुभावितस्य दैन्यग्लानिव्रीडादिभिश्च व्यभिचारिभिरुपचितस्य निर्वेदस्य वैशद्येन यद्वा प्राधान्येनाभिव्यञ्जनं द्रष्टुं शक्यते सुधीभिः।

**ग्लानिः–** व्यभिचार्यसौ मनस्तापक्षुत्पिपासारतिक्लमादिभिः पात्रविशेषे दौर्बल्यवैवर्ण्यादिदर्शनाज्जायते। भावस्यास्य विषादाद्वैलक्षण्यमिदं यद् विषाद आलम्बनगत-सत्त्वसंक्षयाज्जन्यः, ग्लानिस्तु पुनरालम्बनगतदेहसंक्षयादिति। व्यभिचारिणोऽस्य वाक्यार्थीभावो-ऽभिज्ञानशकुन्तले तृतीयेऽङ्के शकुन्तलाप्राप्त्यभिलाषसमन्वितस्य दुष्यन्तस्य शकुन्तला-विषयिण्यामस्यामुक्तावनुसन्धेयः –

**क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं**
**मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।**
**शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते**
**पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी।।**[8]

अत्र कामज्वराभिभूतशकुन्तलाविभावविभावितः कपालस्तनमध्यादिदौर्बल्यानुभावानुभावितः अथ च चिन्तौत्सुक्यव्याधिप्रभृतिभिर्व्यभिचारिभिरुपचितो ग्लान्याख्योव्यभिचार्येव प्रकरणविशेषांशानुरोधात् प्राधान्यमवाप्तः सहृदयहृदयाह्लादीति स्पष्टमेव। अयमेव भावः 'प्रत्यादिष्टविशेषमण्डनविधिः' 'वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः'[9] इत्यादिष्वपि प्राधान्येन प्राकाश्यमानीतः।

**शङ्का—** स्वस्यापरस्य वानुचितकर्मणा सम्भावितस्यानिष्टस्य तर्कणाया मूले वर्तमानोऽयं भावविशेषो वैवर्ण्यकम्पवैस्वर्यमुखशोषादिभिरनुभावैः प्रकटीक्रियते।[10] भावविशेषोऽयं शाकुन्तले राज्ञो दुष्यन्तस्याधोनिर्दिष्टायामुक्तौ प्रतीतिविषयीभवति –

**राजा—**वेत्रवति! किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः–

**किं तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं**
**धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम्।**
**आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-**
**मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः॥**[11]

प्रसङ्गेऽस्मिन् कण्वशिष्याणां सहसा हस्तिनापुरागमनं विचारयतो राज्ञस्तपोदूषणा-सच्चेष्टिताद्यनर्थस्य तर्कणाया मूले वर्तमानो भावविशेषः शङ्केत्यवधार्यः। वैवर्ण्यमुख-शोषवैस्वर्याद्यनुभावैः प्रतीतियोग्यायां दुष्यन्तान्तरालम्बनायामस्यां शङ्कायां चिन्तौत्सुक्यावेगवितर्का व्यभिचारिण उपचायकत्वेन सन्ति। 'क्व वयं क्व परोक्षमन्मथो'[12] इत्यादावप्ययमेव भावो वाक्यार्थीभूतः।

**श्रमः—** भावोऽयं व्यायामनृत्तमैथुनाध्वगमनादिकारणाज्जायते। अत्र निःश्वासाङ्ग-मर्दनमन्दगमनादयोऽनुभावा भवन्ति।[13] प्रकृतनाटके श्रमस्याभिव्यञ्जनमधोनिर्दिष्टे स्थले सुतरां स्पष्टम् –

**स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा**
**दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।**
**बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं**
**बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः॥**[14]

पादपसेनचव्यापृतां शकुन्तलामुद्दिश्य राज्ञो दुष्यन्तस्य कथनेऽत्र स्रस्तांसत्व-लोहिततलत्वस्तनवेपथुत्वादिलक्षणदर्शनात् शकुन्तलालम्बनः श्रमव्यभिचारी प्राधान्येन प्रकाशतामेति। अङ्गशैथिल्यस्तनवेपथुस्वेदप्रभृत्यनुभावानुभावितोऽयं भाव आलस्य-ग्लानिव्यभिचारिभ्यामुपचितिं याति।

**हर्षः—** देवगुरुस्वाम्यादीनां प्रसादः प्रियमेलनं प्रियदर्शनं मनोरथसिद्धिदुर्लभधनावाप्ति-सन्ततिलाभप्रभृतयश्च हर्षस्याभिव्यक्तौ कारणत्वेन वर्तमाना भवन्ति। भावोऽयं नेत्रविस्तार-मुखविकासमधुरवाग्रोमाञ्चाश्रुगद्गदादिभिरनुभावैः प्रतीतियोग्यः क्रियते।[15] प्रियदर्शनजन्यो वाक्यार्थीभूतो हर्षः प्रकृतनाटकस्याग्रिमेंऽशेऽनुभवविषयीभवति –

**स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि।**
**उपरागान्ते शशिनः समुपगता रोहिणी योगम्॥**[16]

देवासुरसङ्ग्रामात्परं स्वर्लोकात् प्रत्यागमनकाले मारीचाश्रमे सहसैव प्रियां शकुन्तलां समक्षमवलोकयतो दुष्यन्तस्यास्यामुक्तौ दुष्यन्तालम्बनस्य हर्षभावस्य प्राधान्येन व्यक्तिः स्फुटैव। अत्राक्षिविस्तारमुखविकासमधुरवाग्रोमाञ्चादयोऽनुभावकाः किञ्च विस्मयस्मृतिमतय उपचायका व्यभिचारिणस्सन्ति। अयमेव भावो 'भव हृदय साभिलाषम्', 'बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया'[17] इत्यादिष्वपि ध्वनित्वमायातीत्यवधेयम्।

**उग्रता–** कस्यचिदपरस्य दुर्वचनक्रौर्यादिकं दृष्ट्वा जायमानं चण्डत्वमेवोग्रता-पदबोध्यम्। उग्रतायां स्वेदशिरःकम्पतर्जनताडनादयोऽनुभावा भवन्ति।[18] अभिज्ञानशकुन्तलस्य पञ्चमेऽङ्के शकुन्तलां प्रत्यादिशतो दुष्यन्तस्य शाठ्यमवलोक्य चण्डत्वमवाप्तस्य शार्ङ्गरवस्य दुष्यन्तं प्रत्यधोनिर्दिष्टायामुक्तौ वाक्यार्थीभूत उग्रताभावोऽनुसन्धेयः।

**मा तावत् – कृताभिमर्शामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः।**
**दुष्टः प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन॥**[19]

अत्र ओष्ठशिरःकम्पाङ्गुलितर्जनवाचिकभर्त्सनरूपैरनुभावैरनुभावितः कोपावेगचिन्ता-व्यभिचारिभिश्चोपचितः शार्ङ्गरवालम्बनक उग्रताभावः स्फुटमेवानुभवविषयीभवति। अन्यत्रापि '**आजन्मनः शाठ्यमशिक्षितो यः**' इत्यादावप्ययमेव भावो वाक्यार्थीभूतः।

**चिन्ता–** ऐश्वर्यभ्रंशदारिद्र्यानिष्टावाप्त्यादितो जायमाना स्मृत्याधारितापि स्मृतिभिन्ना चित्तवृत्तिः चिन्तापदवाच्या भवति। चिन्ताभावभावितो जन ऐश्वर्यभ्रंशादिकमनिष्टं पुनः पुनः स्मर्यमाणस्तत्प्रतिकर्तुं विचारयन् किञ्चिद्वैकल्यं नैराश्यञ्चानुभवति। भावस्यास्य प्रकटने निःश्वासोच्छ्वासाधोमुखचिन्तनाकाशावलोकनवैवर्ण्यमुखसङ्कोचादयोऽनुभावा भवन्ति। प्रकृतरूपके चिन्ताया ध्वननमधोनिर्दिष्टे स्थले द्रष्टव्यमस्ति –

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**
**रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
**न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥**[20]

शकुन्तलारूपलुब्धस्य दुष्यन्तस्यास्यामुक्तौ निःश्वासोच्छ्वासाक्षिसङ्कोचाद्यनुभावानुभाविता दुष्यन्तालम्बना चिन्ता ग्लानिशङ्कादिव्यभिचारिभिः पुष्टिं याति।

**गर्वः–** स्वस्य स्वजनानां वा ऐश्वर्यसमृद्धिविद्योच्चकुलोत्पत्तिशौर्यादिसद्भावाज्जायमानो

मद एव गर्व इति कथ्यते। भावस्यास्याभिनयोऽवज्ञोद्वीक्षणाशिष्टताप्रदर्शनादिभिरनुभावैः क्रियते।[21] वाक्यार्थीभूतस्य गर्वस्य निदर्शनं कर्तुं शक्यते प्रकृतनाटकस्याधस्तान्निर्दिष्टेंऽशे–

**प्रथमः ( ऋषिकुमारः ) – ( राजानमवलोक्य ) अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः। अथवोपपन्नमेतदृषिभ्यो नातिभिन्ने राजनि। कुतः -**

**अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये**
**रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।**
**अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः**
**पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥**[22]

अत्र ऋषिकुमारनिष्ठे दुष्यन्तनिष्ठतत्तद्गुणप्रयुक्ते गर्वभावे तत्तद्गुणविशिष्टो दुष्यन्त आलम्बनविभावो मुखविकासाक्षिविस्तारगुणाख्यानप्रभृतयोऽनुभावा अथ च धृतिमतिहर्षाः व्यभिचारिणस्सन्ति। नाटकेऽन्यत्रापि '**रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः**', '**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्**', '**कुमुदान्येव शशाङ्कः सविता बोधयति**'[23] इत्यादिष्वपि गर्वव्यभिचारिणः प्राधान्येनाभिव्यक्तिः स्फुटैव।

**स्मृतिः–** सदृशज्ञानचिन्तादिभिरभिव्यक्तो भ्रूसमुन्नयनादिभिश्चानुभावैः प्रतीति-विषयीक्रियमाणोऽयं व्यभिचारिभावः[24] प्रकृतनाटकस्याधोनिर्दिष्टे पद्ये सुव्यक्तो दृश्यते–

**तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं**
**क्लान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।**
**हस्ताद् भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो**
**निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि॥**[25]

प्रकृतनाटकगततृतीयाङ्कस्य दृश्येऽस्मिन् वेतसलतामण्डपात् शकुन्तलायाः प्रस्थानात्परं तच्छरीरलुलितशय्यामन्मथलेखादिकं दृष्ट्वा दुष्यन्तस्य ततो निर्गन्तुमनिच्छायां शकुन्तला-विषयायाः स्मृतेरभिव्यञ्जनमेव कारणत्वेन वर्तमानमस्तीत्यवधेयम्। दुष्यन्तालम्बनकः किञ्च शरीरलुलितत्वनखार्पितत्वाद्युद्दीपनकोऽयं स्मृतिभावो भ्रूसमुन्नयनाक्षिविस्तारतत्तद्दशाख्यानाद्यनुभावैः प्रकटीक्रियते हर्षौत्सुक्यालस्यचिन्ताव्यभिचारिभिश्चोपचीयते। नाटकेस्मिन् –

'**एकैकमत्र दिवसे दिवसे मदीय**...'[26] इत्यादावप्ययं स्मृतिभावोऽभिव्यज्यते।

**मतिः–** गुरूपदेशाद्युपायैर्भ्रान्तिच्छेदपुरस्सरं तत्त्वातत्त्वनिर्णये वर्तमानो भावविशेषो मतिः।[27] अभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के कण्वाज्ञया वेलां ज्ञातुं प्रवृत्ते ब्रह्मचारिणि यथायं मतिभावः प्रकाशितस्तदत्रावलोकनीयम् – **हन्त प्रभातम्! तथा हि–**

**कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या**
**दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः।**
**वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः**
**पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः॥[28]**

तुहिनरञ्जनमयूरजागरणादिकं वीक्ष्य ब्रह्मचारिणोक्ते प्रभातनिर्णयपरेऽत्र वाक्ये मतिभावो वैशद्येन प्रकाशते। ब्रह्मचार्यालम्बनकेऽस्मिन् मतिभावध्वनौ मुखविकासस्वरदार्ढ्यतत्तल्लक्षणाख्यानप्रभृतयोऽनुभावा धृतिस्मृती च व्यभिचारिणौ स्तः।

**वितर्कः—** तत्त्वान्वेषणक्रमे कानिचिल्लक्षणानि दृष्ट्वा संशयमपनेतुं कस्मिन्नप्येकस्मिन् पक्षे निर्णयस्य प्रयासे वर्तमानोऽयं भावविशेषो भ्रूशिरोऽङ्गुलिनर्तनादिभिरनुभावैः प्रतीतिविषयीक्रियते।[29] संशयापूरितोऽयं भावविशेषः प्रकृतनाटकस्य तृतीयेऽङ्के कामाविष्टचेतसो दुष्यन्तस्यास्यामुक्तौ सहृदयैरनुसन्धेयः—

**चित्रे निवेश्य परिकल्पितसत्त्वयोगा रूपोच्चयेन मनसा विधिना कृता नु।**
**धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे॥[30]**

अत्र शकुन्तलाया अप्रतिमं रूपमवलोक्य तस्या निर्माणविधेरनुसन्धानक्रमे भ्रूशिरोऽङ्गुलिनर्तनादिभिरनुभावैरनुभावितो मत्यौत्सुक्यहर्षव्यभिचारिभिरुपचितो दुष्यन्तालम्बनो वितर्कः प्राधान्यं भजते। व्यभिचार्ययं तृतीयेऽङ्के शकुन्तलान्वेषणक्रमे कामतप्तस्य दुष्यन्तस्यास्यामुक्तावप्यनुसन्धेयः। **अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे सन्निहितया तया भवितव्यम्। तथाहि —**

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा॥[31]**

दृश्येऽस्मिन् पदपङ्क्तिदर्शनाद् वेतसलतामण्डपे शकुन्तलायाः सम्भावनायां वितर्कस्याभिव्यक्तिस्तु स्फुटैव। दुष्यन्तालम्बनकेऽस्मिन् व्यभिचारिणि भ्रूशिरोऽङ्गुलिसञ्चालनादयोऽनुभावाः किञ्च हर्षोत्सुक्यमतिप्रभृतय उपचायका व्यभिचारिणस्सन्ति। नात्र मतेः प्राधान्यमाशङ्कनीयम्, 'भवितव्यम्' इत्यादिना विनिश्चयाभावस्य स्फुटत्वात्। '**स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया**'[32] इत्यादावप्ययमेव भावोऽनुसन्धेयः।

**विषादः—** सामर्थ्यसत्त्वेऽपि कार्यासिद्धौ कस्यचिद्वा सन्तापे आत्मनः कारणतां मत्वा जायमानः खेदः (सत्त्वसंक्षय) एव विषादपदबोध्यः।[33] निःश्वासवैवर्ण्यविमनस्कतादिभिरनुभावैर्बोध्यमानोऽयं भावश्चिन्ताग्लानिदीनताप्रभृतिभिर्व्यभिचारिभिः परिपुष्टिं नीयते।

प्रकृतरूपके भावस्यास्य प्राधान्येनाभिव्यञ्जनमत्र सन्ततेरभावाद्विकलस्य दुष्यन्तस्योक्तौ द्रष्टव्यम्–

**अहो, दुष्यन्तस्य संशयमारूढाः पिण्डभाजः। कुतः,**

**अस्मात्परं बत यथाश्रुति सम्भृतानि को नः कुले निवपनानि नियच्छतीति।**

**नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति॥**[34]

प्रसूतिविकलदुष्यन्तालम्बनकोऽत्र विषादव्यभिचारी निःश्वासवैवर्ण्यविमनस्कताहृत्ताप-प्रकाशनप्रभृतिभिरनुभावैः प्रतीतियोग्यः कृतः चिन्ताग्लानिदैन्यव्यभिचारिभिश्चोपचितो भावध्वनिपदवीमारुह्य सहृदयहृदयसंवेद्यो भवतीति सुस्पष्टमेव। इत्थमेवान्यात्रापि बहुषु स्थलेषु ध्वनिरूपतां यातो भावोऽयं सहृदयैरूह्यः।

**औत्सुक्यम्–** कस्यचिदिष्टस्यावाप्त्यर्थं शबलितो यद्वा तदिष्टस्यावाप्तौ कालकृतं विलम्बं सोढुमसमर्थतायां वर्तमानो यो भावविशेषः स एवौत्सुक्यपदबोध्यः। अत्रोच्छ्वासनिःश्वासत्वराक्षिविस्तारस्वेदादयोऽनुभावाश्चिन्ताशङ्कावेगादयश्च व्यभिचारिणो भवन्ति।[35] भावोऽयमभिज्ञानशकुन्तलस्यात्रांशेऽनुभवितुं शक्यः –

**वैखानसं किमनया व्रतमाप्रदानाद् व्यापाररोधि मदनस्य निषेवितव्यम्।**

**अत्यन्तमेव सदृशेक्षणवल्लभाभिराहो निवत्स्यति समं हरिणाङ्गनाभिः॥**[36]

कण्वाश्रमे सखीभ्यां शकुन्तलोत्पत्तिविषयिणीं वार्तां विज्ञाय तत्राप्त्यभिलाषिणो दुष्यन्तस्य शकुन्तलाया विवाहसम्बन्धिन्यामस्यां जिज्ञासायां तन्निष्ठस्यौत्सुक्यस्याभिव्यक्तिर्वैशद्येन जायते। दुष्यन्तालम्बनकोऽयं भावो निःश्वासत्वराक्षिविस्तारप्रभृतिभिरनुभावैः प्रतीतिविषयीक्रियतेऽथ च चिन्ताशङ्काग्लानिव्यभिचारिभिरुपचीयते। '**पृष्टा जनेन समदुःखसुखेन बाला**'[37] इत्यादाव-पीदमेवौत्सुक्यमनुसन्धेयम्।

**चपलता–** अमर्षप्रातिकूल्येर्ष्यारागद्वेषमात्सर्यादिवशात् चित्तस्यानवस्थितेरनालोच्यकारित्वे वर्तमानेयं चपलता भर्त्सनवाक्पारुष्यप्रहारताडनादिभिरनुभावैरभिनीयते। कामावेशात् विकल-चेतसा महर्षिकण्वमाक्षिपतो दुष्यन्तस्याधोनिर्दिष्टायामुक्तौ चपलताव्यभिचारिणो वाक्यार्थीभावमवलोकयन्तु सहृदयाः–

**राजा–अहो, असाधुदर्शी खलु तत्रभवान् काश्यपो य इमामाश्रमधर्मेण नियुङ्क्ते–**

**इदं किलाव्याजमनोहरं वपुस्तपः क्षमं साधयितुं य इच्छति।**

**ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति॥**[38]

उक्तस्थले स्वैराचरणपरुषवचनप्रभृतिभिरनुभावैः प्रतीतिविषयीकृतस्तथा चासूयोन्माद-

जडताव्यभिचारिभिः पुष्टः शकुन्तलासक्तदुष्यन्तालम्बना चपलता वाक्यार्थीभावं यातीत्यवधेयम्। यथा वा विरहवेदनया विकलस्यातश्चाव्यवस्थितचेतसो दुष्यन्तस्य चित्रगतं भ्रमरमुद्दिश्य कथितायामस्यां वाचि चपलताभावः सुस्पष्टमेवानुभवितुं शक्यते सुधीभिः–

**राजा – ( सकोपम् ) भोः न मे शासने तिष्ठसि? श्रूयताम्, तर्हि सम्प्रति–**

**अक्लिष्टबालतरुपल्लवलोभनीयं पीतं मया सदयमेव रतोत्सवेषु।**
**बिम्बाधरं स्पृशसि चेद् भ्रमर प्रियायास्त्वां कारयामि कमलोदरबन्धनस्थम्।।**[39]

अन्येषां मोहामर्षत्रासादीनामपि नाटके यथावसरमभिव्यक्तिविषयीभूतानां व्यभिचारिणामत्र निबन्धे विवरणं विस्तरभयान्न क्रियते। कथाप्रवाहे आलम्बनगताः विविधाः दशाः प्रकाशयितुं कथायां हृद्यत्वं नैरन्तर्यञ्चाधातुं शृङ्गारवीरादिरसातिरिक्तं निर्वेदग्लानिप्रभृतीनां व्यभिचारिभावानामपि यथावसरं प्राधान्येन प्रकाशनमपरिहार्यमेवेत्यवगन्तव्यम्। अत एव कविकुलगुरुणापि नाटकस्य तत्तत्स्थलेषु दुष्यन्तशकुन्तलादीनां दशाविशेषं प्रकाशयितुं कथाप्रवाहेऽबाधत्वं मञ्जुलत्वं सहृदयहृदयावर्जकत्वञ्चाधातुं निर्वेदादीनामौचित्यानुसार्यभिव्यञ्जनमकारि येन 'तत्र रम्या शकुन्तला' इत्युक्तिरन्वर्थतां यातीति शिवम्।

*

## सन्दर्भाः

1. काव्यप्रकाशे 4.35 (सूत्रम् 48), पृ.140
2. साहित्यदर्पणे 3.142
3. सङ्गीतरत्नाकरे 7.1377
4. सङ्गीतरत्नाकरे 7.1377
5. अभिज्ञानशकुन्तले 6.9
6. अभिज्ञानशकुन्तले 6.17, 24
7. सङ्गीतरत्नाकरे 7.1539–41
8. अभिज्ञानशकुन्तले 3.7
9. अभिज्ञानशकुन्तले 6.6, 7.21
10. साहित्यदर्पणे 3.161
11. अभिज्ञानशकुन्तले 5.9

12. अभिज्ञानशकुन्तले 2.18
13. भावप्रकाशने 1. पृ.26-27
14. अभिज्ञानशकुन्तले 1.29
15. सङ्गीतरत्नाकरे 7.1584–86
16. अभिज्ञानशकुन्तले 7.22
17. अभिज्ञानशकुन्तले 1.27, 7.23
18. दशरूपके 4.15
19. अभिज्ञानशकुन्तले 5.20
20. अभिज्ञानशकुन्तले 2.10
21. साहित्यदर्पणे 3.154; दशरूपके 4.19
22. अभिज्ञानशकुन्तले 2.14
23. अभिज्ञानशकुन्तले 1.13, 2.15, 5.28
24. दशरूपके 4.20
25. अभिज्ञानशकुन्तले 3.23
26. अभिज्ञानशकुन्तले 6.12
27. दशरूपके, 4.27
28. अभिज्ञानशकुन्तले 4.2
29. साहित्यदर्पणे 3.171
30. अभिज्ञानशकुन्तले 2.9
31. अभिज्ञानशकुन्तले 3.5
32. अभिज्ञानशकुन्तले 2.2
33. सङ्गीतरत्नाकरे 71589–92
34. अभिज्ञानशकुन्तले 6.25
35. दशरूपके 4.32, साहित्यदर्पणे 3.159
36. अभिज्ञानशकुन्तले 1.26
37. अभिज्ञानशकुन्तले 3.8
38. अभिज्ञानशकुन्तले 1.18
39. अभिज्ञानशकुन्तले 6.20

*

## किञ्चिद् रामायणीयम्

*** यदा प्रथमवार हनुमान् लङ्कां प्रविवेश, तदा तेन राक्षसाः इत्थं दृष्टाः –**

स्वाध्यायनिरताः, रावणस्तवसंयुक्ताः, गर्जन्तः। तेन राक्षसस्य चराः एवंप्रकारेण दृष्टाः –

| | | |
|---|---|---|
| * दीक्षिताः | * जटिलाः | * मुण्डाः |
| * गोजिनाम्बरवाससः | * दर्भमुष्टिप्रहरणाः | * अग्निकुण्डायुधाः |
| * कूटमुद्गरपाणयः | * दण्डायुधधराः | * एकाक्षानेकवर्णाः |
| * लम्बोदरपयोधराः | * करालाः | * भुग्नवक्त्राः |
| * विकटाः | * वामनाः | * धन्विनः |
| * खड्गिनः | * शतघ्नीमुसलायुधाः | * परिघोत्तमहस्ताः |
| * विचित्रकवचोज्ज्वलाः | * नातिस्थूलाः | * नातिकृशाः |
| * नतिदीर्घातिह्रस्वकाः | * नातिगौराः | * नातिकृष्णाः |
| * नातिकुब्जाः | * न वामनाः | * विरूपाः |
| * बहुरूपाः | * सुरूपाः | * सुवर्चसः |
| * ध्वजिनः | * पताकिनः | * विविधायुधाः |
| * शक्तिवृक्षायुधाः | * पट्टिशाशनिधारिणः | * क्षेपणीपाशहस्ताः |
| * स्रग्विणः | * स्वनुलिप्ताः | * वराभरणभूषिताः |
| * नानावेषसमायुक्ताः | * यथास्वैरचराः | * तीक्ष्णशूलधराः |
| * वज्रिणः | * महाबलाः | |

**आधारः - रामायणम्, सुन्दरकाण्डम्, 4 सर्गः**

# शिक्षापरम्परायाः सातत्यद्योतकं त्रिनयनभाष्यम्

**प्रो. रत्नमोहनझाः**

भारतीयज्ञानविज्ञानधर्मसंस्कृतिसाहित्यदर्शनसदाचाराणां मूले भवति वेदः। विश्वस्मिन् विश्वे सर्वाधिकं प्राचीनं वैदिकवाङ्मयं वर्तते। भारतीयसामाजिकसंरचनायाः गगनचुम्बिनी अट्टालिका वेदरूपाधारशिलायामेव सुप्रतिष्ठिता विद्यते। पाणिनीयशिक्षानुसारेण वेदपुरुषस्य षडङ्गानि भवन्ति–

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यत।।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**[1]

अङ्ग्यन्ते ज्ञायन्ते एभिः इति अङ्गानि। एकैकस्यापि अङ्गस्य सम्यक् परिशीलनेन अङ्गिनः सम्पूर्णं ज्ञानं भवितुर्महति। आचार्यबलदेवोपाध्यायः निगदति– 'वेदस्य यथार्थज्ञानाय वर्तते षड्विषयाणां ज्ञानं नितान्तमावश्यकम्। वैदिकमन्त्राणां सम्यगुच्चारणार्थं प्रवृत्तमङ्गं शिक्षेत्यभिधीयते। यज्ञयागादीनां विधिवदनुष्ठानमस्ति वेदस्य मुख्यं प्रयोजनम्। तदर्थं यदङ्गं प्रयुज्यते तत् 'कल्प' शब्देनोच्यते। कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति कल्पशब्दार्थः। व्याकरणं पदानां प्रकृतिप्रत्ययानुपदिश्य पदार्थनिश्चयं करोति। पदस्वरूपं पदार्थञ्च निर्णेतुं व्याकरणं महदुपयोगीति तदपि वेदाङ्गमुच्यते। निरुक्ते वैदिकपदानां विद्यते निर्वचनम्। निरुक्तिभिन्नता ह्यर्थभिन्नतायाः कारणमतो वेदस्यार्थनिश्चयाय निरुक्तमपि विद्यते वेदाङ्गम्। छन्दोमयी वाग् वेदः, छन्दसां सम्यग् ज्ञानमन्तरा वैदिकमन्त्राणां पाठविधेर्ज्ञानं न सम्भवति, अतएव छन्दसां वेदाङ्गत्वमङ्गीक्रियते। वैदिककर्मकाण्डे तिथिनक्षत्रमाससंवत्सरादीनां ज्ञानं नितान्तमपेक्षितम् विद्यते। निर्दिशति च यज्ञानां समुचितं समयं ज्योतिषम्। अत एव ज्योतिषमपि वेदाङ्गं स्वीकृतं विद्यते। इमान्येव वेदोपयोगीनि षट् तत्त्वानि वेदाङ्गानि कथ्यन्ते।

षड्विधेष्वेतेषु वेदाङ्गेषु शिक्षायाः महनीयं स्थानं वर्तते। प्राणिनः श्वासोच्छ्वासं विना भवितुं नार्हन्ति। एतदर्थं यथा नासिका वर्तते तथैव वेदपुरुषस्य नासिकास्थानीया भवति

शिक्षा। सा विद्या स्वरवर्णादीनामुच्चारणविधिमुपदिशति। उक्तं हि सायणाचार्येण ऋग्वेदभाष्यभूमिकायाम्–

**'स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा।'**

उपाध्यायवर्यानुसारेण वेदमन्त्राणां शुद्धोच्चारणे उदात्तादिस्वरज्ञानं परमावश्यकं भवति। ऋषयः गुरवश्च मन्त्राणां शुद्धोच्चारणे अतीव दत्तावधानाः आसन्। गुरुमुखाच्छुद्धोच्चारण-शिक्षणपरम्परा विशेषतो वेदे अद्यापि अक्षुण्णतया प्रचलति। तस्मात् शुद्धोच्चारणप्रकारोप-देशकमिदमङ्गं वेदाङ्गेषु प्राथम्यं भजते। वेदे स्वरप्रामुख्यस्य प्रधानं कारणं विद्यते अर्थनियामकत्वम्। एकस्यापि शब्दस्य स्वरभेदेनार्थभेदो जायते। स्वरोच्चारणे स्वल्पाऽपि त्रुटिरनर्थकारिणी भवति। पाणिनीयशिक्षायामुच्यते –

**मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात्॥**[3]

तैत्तिरीयोपनिषदः प्रथमवल्ल्यां शिक्षायाः मूलसिद्धान्तः प्रतिपादितो विद्यते। तद्यथा–

**शीक्षां व्याख्यास्यामः। वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शीक्षाध्यायः।**[4]

तत्रैतानि षट् तत्त्वानि शिक्षायाः अङ्गानि निगदितानि सन्ति। वर्णोऽक्षरसमूहः। वेदार्थज्ञाने वर्णपरिचयो नितरामपेक्षितो भवति। स्वर उदात्तादिः। मात्रा स्वरोच्चारणे प्रयुज्यमानः समयः। ह्रस्वदीर्घप्लुतभेदेन सा मात्रा त्रिविधा। मात्रायाः ह्रस्वादिभेदज्ञानम्, 'उ' वर्णस्यो-च्चारणेन स्फुटतया जायते। बलं स्थानप्रयत्नौ। कण्ठादीनि वर्णानामुच्चारणस्थानानि। कण्ठादिभ्य एवाक्षराणि उच्चार्यन्ते। वर्णोच्चारणप्रयास एव प्रयत्नः। स च आभ्यन्तरबाह्यभेदेन मुख्यतो द्विविधः। साम साम्यम्। निर्दुष्टं माधुर्यादिगुणयुतञ्चोच्चारणं साम्यम्। उच्चारणसाम्ये षड् गुणाः अपेक्षिताः भवन्ति–

**माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः।**

**धैर्यं लयसमर्थश्च षडेते पाठका गुणाः॥**[5]

सन्तानः संहिता। अर्थात् पदानामतिशयसन्निधिः। सत्यामेव संहितायां भवति पदानां सन्धिः। यथा 'वायो आयाहि' इति वाक्ये स्वतन्त्रं पदद्वयं विद्यते। यदा एकस्मिन्नेव वाक्ये द्वयोः पदयोः सहोच्चारणं भवति तदा सन्धिवशादुच्यते– 'वायवायाहि' इति। प्रत्येकं वेदस्यास्ति स्वकीयः शिक्षाग्रन्थः। तस्मिन् तद्वेदानुकूलोच्चारणविधानं निहितं विद्यते।

**शिक्षापरम्परा**

भारते शिक्षायाः सुमहती परम्परा वर्तते। प्रातिशाख्यमिव शिक्षाग्रन्थोऽपि केनचिद्वेदेन सम्बद्धो भवति। एतेषां नाम्नि एव तत्तद्वेदः सम्बद्धो दृश्यते। शिक्षाग्रन्थाः मुख्यतया कारिकासु निबद्धाः वर्तन्ते। केचन शिक्षाग्रन्थाः सूत्रात्मकाः अपि वर्तन्ते। शिक्षापरम्परासु चतुस्त्रिंशत् शिक्षाग्रन्थाः समुपलब्धाः सन्ति। एतेषां संक्षिप्तः परिचयः प्रस्तूयते।

**1. स्वराङ्कुशाशिक्षा**

इयं शिक्षा ऋग्वेदसम्बद्धा वर्तते। श्रीमान् मल्लशर्मा हस्तस्वरप्रक्रियानामके शिक्षाग्रन्थे स्वराङ्कुशाशिक्षायाः प्रणेतारं रावणं मनुते। परन्तु स्वराङ्कुशाशिक्षायां जयन्तस्वामिनः उल्लेखः वर्तते। अस्यां शिक्षायां 25 श्लोकाः सन्ति। ग्रन्थस्यास्य मङ्गलाचरणानुसारेण अस्याः नाम स्वरनिर्णयः आसीत्। अनन्तरं च नामपरिवर्तनं जातम् इति अनुमीयते। 'शिक्षासङ्ग्रह'-नामके ग्रन्थे इयं प्रकाशिता वर्तते। अस्याः सम्पादकः पं. युगलकिशोरपाठकः विद्यते।

**2. षोडशश्लोकी शिक्षा**

अस्याः प्रणेता रामकृष्णाचार्यः वर्तते। माहेश्वरसूत्राधारिता इयं शिक्षा वर्तते। आद्यन्तयोः श्लोकयोः दर्शनेन ज्ञायते यदियं साक्षात् शिवमुखात् निःसृता वर्तते।

**अथ शिक्षां प्रवक्ष्यामि वाच उच्चारणे विधिम्।**
**यथा संव्यवहारेषु स्वयं प्रोक्ता स्वयंभुवा॥**
**शिवास्यान्निःसृतां शिक्षां प्रयतो यः पठेदिह।**
**पुत्रकीर्तिधनायुष्यान्स्वर्गेऽपि सुखमश्नुते॥**[6]

अस्याध्ययनेन वर्णानां सद्यः बोधो भवति। तस्मादियं मणिभूता उच्यते।

**सद्यो बोधकरा शिक्षा मणिभूता प्रकाशिता।**[7]

आहत्य 63 वर्णानां विभाजनमत्र पाणिनीयपरम्परानुसारेण एव वर्तते। इयमपि शिक्षाग्रन्थे प्रकाशिता।

**3. शैशिरीयशिक्षा**

ऋग्वेदस्य शैशिरीयशाखासम्बद्धेयं शिक्षा। शैशिरः कश्चन व्यक्तिविशेषः शाखाद्योतकः वा इति अनुसन्धानविषयः। यतो हि शिक्षेयं कथयति–

**शैशिरस्य तु शिष्यस्य शाकटायनमेव च।**
**सर्वज्ञं सर्वकर्तारमाचार्यं तु प्रणम्य च।**
**शैशिरोऽहं प्रवक्ष्यामि शाखाया लक्षणं विधिम्॥**[8]

अस्यां शिक्षायां विशेषतया वर्णानां स्वराणां च षण्णां दोषाणां वर्णनं कृतं वर्तते–

**गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।**
**अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥**[9]

तत्रैव पाठकानां षण्णां गुणानामपि वर्णनं कृतं वर्तते –

**माधुर्यमक्षरव्यक्तं पदव्यक्तं तु सुस्वरम्।**
**धैर्यं लघुसमायुक्तं षडेते पाठके गुणाः॥**[10]

ऋक्प्रातिशाख्येन अतीव साम्यं वर्तते अस्याः शिक्षायाः। इयं शिक्षा ऋग्वेदाध्येतुः कृते अत्यन्तम् उपकाराय भवति। अस्याः सम्पादनं डा. तारापदचौधुरीवर्येण कृतम्। डा. रघुवीरमहाशयेन चास्याः प्रकाशनं विहितम्।

### 4. आपिशलिशिक्षा

अस्याः शिक्षायाः रचनाकारस्य विषये मतद्वयं वर्तते। केचन वदन्ति यत् इयं रचना आपिशलिमुनिना कृता। अन्ये च कथयन्ति यत् केनचित् परवर्तिना आपिशलिनाम्ना रचनेयं विहिता। इयं शिक्षा सर्ववेदोपकारिका वर्तते। स्थान–करण–अनुप्रदान–प्रयत्नविषयेष्वेव इयं शिक्षा प्रवर्तते।

आपिशलिशिक्षायाः अष्टौ खण्डाः समुपलब्धाः सन्ति। प्रथमखण्डे 27 सूत्रेषु वर्णस्थानविचारः; द्वितीये खण्डे 10 सूत्रेषु करणविचारः, तृतीये खण्डे अन्तःप्रयत्नविचारः; चतुर्थे खण्डे बाह्यप्रयत्नविचारः, पञ्चमे खण्डे स्पर्शयमादिविचारः, षष्ठे खण्डे ह्रस्वदीर्घप्लुतविचारः, सप्तमे खण्डे स्थान–करण–प्रयत्नलक्षणम्, अष्टमे च खण्डे ध्वनेः उत्पत्तिः विवृतसंवृतादिविचारः वर्णितः वर्तते।

### 5. पाणिनीयशिक्षा

शिक्षेयं सर्ववेदसम्बद्धा वर्तते। केचन कथयन्ति यत् रचनेयं केनचित् परवर्तिना आचार्येण कृता। पाणिनेः इयं रचना नास्तीति। ग्रन्थेऽस्मिन् 60 कारिकाः वर्तन्ते। दोषयुतस्य उच्चारणस्य दुष्परिणामः कथं भवतीति प्रसिद्धम् उदाहरणं शिक्षायामस्यां निगदितं वर्तते। शिक्षासङ्ग्रहे वैयाकरणसिद्धान्तकौमुद्यां च बहुत्र अस्य उल्लेखो वर्तते।

### 6. गौतमीशिक्षा

सामवेदसम्बद्धा इयं संहिता वर्तते। अस्याः अपरं नाम 'संयोगशृङ्खला' अपि वर्तते। महर्षिगौतमप्रणीतायां शिक्षायामस्यां वर्णसंयोगाः विवेचिताः। अस्यां द्वौ प्रपाठकौ वर्तेते।

प्रथमे 7 खण्डाः, द्वितीये च 6 खण्डाः सन्ति। अस्याः वैशिष्ट्यं नाम स्वरवर्णाः अत्र नैव विवेचिताः। केवलं व्यञ्जनवर्णाः विवेचिताः सन्ति। शिक्षाकारः गौतमः कथयति यत् सामवेदे अधिकाधिकं सप्तानां व्यञ्जनानामेव संयोगः भवति। ततोप्यधिकाः वर्णाः एकत्र नैव युज्यन्ते। तच्च– **गौतमेनोक्तं न सप्ताक्षरात्परं संयोगो भवति।**[11]

**7. लोमशी शिक्षा**

अस्याः शिक्षायाः प्रणेता लोमशमहर्षिः अस्ति। अस्या प्रकाशनं 'शिक्षासङ्ग्रहे' वर्तते। प्रथमकारिकायामस्यां गर्गाचार्यस्यापि उल्लेखो वर्तते–

**लोमशिन्यां प्रवक्ष्यामि गर्गाचार्येण चिन्तितम्।**
**समिधानां यथोक्तं त्वाचार्यवचनं यथा।।**[12]

लोमशीशिक्षायाम् अष्टषु खण्डेषु 74 कारिकाः सन्ति। सामगानदृष्ट्या अतीव महत्त्वपूर्णेयं शिक्षा। अस्यां सामगानस्य ह्रस्व–दीर्घ–वृद्ध–अभिगीत–सम्पात–उत्तान–किट्–किट् अवक्षेप–प्रगान–उपद्रव–यमल–प्रणत–नीचदीप्ता–आयती नित्यायता–निषाद–ऋषभ–आणव–द्विराणव इत्येतेषाम् अनेकेषां पारिभाषिकशब्दानां प्रयोगः वर्तते। सामवेदाचार्येषु लोमशगर्ग–तुम्बुरूणां मतानि अपि प्राप्यन्ते अस्यां शिक्षायाम्। मात्रा–द्विमात्रा–त्रि–मात्रोच्चारणार्थं लोमशशिक्षा खगानां रवं परिमाणत्वेन अङ्गीकरोति। तच्च–

**चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्।**
**शिखी त्रिमात्रो विज्ञेय एष मात्रा-परिग्रहः।।**[13]

**8. नारदीयशिक्षा**

अस्याः शिक्षायाः रचयिता देवर्षिः नारदो वर्तते। परन्तु ग्रन्थस्य परिशीलनेन ज्ञायते यत् केनचित् परवर्तिना आचार्येण शिक्षेयं रचिता स्यात्। नारदीयशिक्षायां द्वौ प्रपाठकौ वर्तेते। एकैकस्मिन् अष्टौ खण्डाः सन्ति। सम्पूर्णशिक्षायां षोडशखण्डेषु आहत्य 227 कारिकाः सन्ति। तृतीयखण्डः गद्यात्मकः वर्तते–

**'गानस्य तु दशविधा गुणवृत्तिस्तद्यथा-रक्तं पूर्णमलङ्कृतं प्रसन्नं व्यक्तं विक्रुष्टं श्लक्ष्णं समं सुकुमारं मधुरमिति गुणाः।'**[14]

खण्डेस्मिन् गानस्य दश गुणाः चतुर्दश दोषाश्च वर्णिताः। एकस्यां कारिकायां विविधसामाजिकानां सङ्गीतविषयिणी रुचि : वर्णिता अस्ति–

**आचार्याः सममिच्छन्ति पदच्छेदं तु पण्डिताः।**
**स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः।।**[15]

अस्याः शिक्षायाः आचार्यशोभाकरविरचिता 'शिक्षाविवरण' नामिका संक्षिप्तटीका प्राप्यते। सा टीका श्रीमता गोपालचन्द्रमिश्रेण सम्पादिता वर्तते।

### 9. याज्ञवल्क्यशिक्षा

इयं यजुर्वेदीया शिक्षा वर्तते। प्रायशः शुक्लयजुर्वेदसम्बद्धाः शिक्षाः आधिक्येन समुपलभ्यन्ते। यजुर्वेदसम्बद्धशिक्षासु याज्ञवल्क्यशिक्षा सर्वाधिकं महत्त्वं धारयति। अस्यां उच्चारणसम्बद्धाः सर्वेऽपि विषयाः साङ्गोपाङ्गं विवेचिताः वर्तन्ते। अस्याः रचयिता महर्षिः याज्ञवल्क्यः वर्तते।

**एतत्सर्वं समाख्यातं याज्ञवल्क्येन धीमता।**[16]

उवटाचार्येणापि वाजसनेयिप्रातिशाख्यभाष्ये याज्ञवल्क्यशिक्षा उद्धृता वर्तते। चतसृषु कण्डिकासु सम्पूर्णतां यातीयं याज्ञवल्क्यशिक्षा। अनेकानि संस्करणानि अस्याः शिक्षायाः प्रकाशितानि सन्ति। तेषु पण्डितप्रवरेण अमरनाथेन सम्पादितं काशीसंस्करणं श्रेष्ठं वर्तते।

### 10. वाशिष्ठी शिक्षा

माध्यन्दिनसंहितायाः मूलस्वरूपज्ञापने इयं शिक्षा अत्यन्तम् उपकारं विदधाति। अस्याः रचना सर्वानुक्रमसूत्राधारेण वर्तते। मन्ये कश्चन वशिष्ठगोत्रीय आचार्यः अस्याः रचनामकरोत्। अस्यां शिक्षायां वर्ण–स्वर–मात्रा–बल–साम– सन्तानेषु एकमपि नैव विवेचितम्। तस्मात् तैत्तिरीयोपनिषदि वर्णितमानकाधारेण अस्या शिक्षायाः शिक्षात्वं नैव सिद्ध्यति। इयम् ऋग्यजुर्मन्त्राणाम् अनुक्रमणी वर्तते।

### 11. कात्यायनी शिक्षा

कात्यायनप्रणीतायामस्यां शिक्षायां 13 कारिकाः सन्ति। तासु कारिकासु स्वरितस्वराणां लक्षणं पदेषु च तेषां स्थितिविषयकं विवेचनं वर्तते। स्वरितस्य स्वतन्त्राश्रितरूपयोः स्वरूपमस्यां शिक्षायां प्रदर्शितं वर्तते। अस्याः शिक्षायाः श्रीप्रणीतस्वामिप्रणीता व्याख्या अपि समुपलभ्यते। शिक्षासङ्ग्रहे चेयं प्रकाशिता विद्यते।

### 12. पाराशरीशिक्षा

शुक्लयजुर्वेदीय शिक्षासु पुष्करतीर्थसदृशी अस्याः प्रतिष्ठा प्रदर्शिता। अस्यां शिक्षायां 160 कारिकाः सन्ति। कारिकासु पाराशरस्य मतमुल्लिखितम्। तत्र एकत्रैव बह्वीनां शिक्षानां नामोल्लेखः दृश्यते–

**याज्ञवल्की तु वाशिष्ठी शिक्षा कात्यायनी तथा।**
**पाराशरी गौतमी तु माण्डव्यामोघनन्दिनी॥**

**पाणिन्या सर्ववेदेषु सर्वशास्त्रेषु गीयते।**
**वाजसनेयशाखायां तत्र माध्यन्दिनी स्मृता।।**[17]

यजुर्वेदीयाः केचन अध्यायाः नमकचमकपुरुषसूक्तरुद्राध्यायादिविशिष्टनाम्ना उपदिष्टाः–

**नमकं चमकं चैव पुरुषसूक्तं तु नित्यशः।**
**प्रविश्यते महादेवो गृहे गृहपतिर्यथा।।**
**रुद्राध्यायः स्वरेणैव कण्डिका दशकेन तु।**
**ततो वाक्यं प्रकुर्वीत ऋचस्ते षोडशाक्षरम्।।**[18]

शिक्षासङ्ग्रहे इयं पाराशरीशिक्षा प्रकाशिता वर्तते।

**13. माण्डव्यशिक्षा**

अस्याः शिक्षायाः प्रणेता महर्षिः माण्डव्यः अस्ति। शिक्षायामस्यां शुक्लयजुर्वेदस्य माध्यन्दिनसंहितायां बकारयुक्तानि पदानि अध्यायक्रमेण कण्डिकाक्रमेण च समाहृतानि सन्ति–

**अथातः संप्रवक्ष्यामि शिष्याणां हितकाम्यया।**
**माण्डव्येन यथा प्रोक्ता ओष्ठ्य-सङ्ख्याः समाहृताः।।**[19]

एकैकस्मिन् अध्याये प्रथमकण्डिका प्रतीकत्वेन उद्धृता। यथा– 'इषे त्वा', 'कृष्णोऽसि', 'समिधाग्नि' इत्यादयः। शिक्षासङ्ग्रहे इयं शिक्षा प्रकाशिता वर्तते।

**14. अमोघानन्दिनी शिक्षा**

अस्यां शिक्षायां 130 कारिकाः सन्ति। तासु ओष्ठ्य–दन्त्य–लघु–लघुतर–नाद–नासिक्य–अनुरङ्ग–रङ्ग–अतिरङ्ग–महारङ्ग इत्यादिसंज्ञकवर्णाः वर्णिताः। वर्णोच्चारणविषयकाः अनेके विषयाः अस्यां शिक्षायाम् उपस्थापिताः। अत्र उक्तं यत् सम्प्रदायसंरक्षणार्थं शिष्यैः स्वकीयशाखायाः सर्वाणि अपि लक्षणानि ज्ञातव्यानि। अन्यथा वाणी नैव शोभते–

**लक्षणेन विना वाणी निर्मलाऽपि न शोभते।**
**प्रमदा रूपसम्पन्ना दरिद्रस्येव योषितः।।**
**स्वरहीना यथा वाणी वस्त्रहीनास्तु योषितः।**
**एवं वर्णा न शोभन्ते प्राणहीनाः शरीरिणः।।**[20]

अमोघानन्दप्रदानकारणादियं शिक्षा अमोघानन्दिनी उच्यते, आहोस्वित् अमोघानन्दनामकेन केनचिदाचार्येण रचितत्वात्। शिक्षासङ्ग्रहे इयं प्रकाशिता वर्तते।

### 15. लघु–अमोघानन्दिनी शिक्षा

अस्यां 17 कारिकाः सन्ति। यजुर्वेदस्य माध्यन्दिनशाखायां पादादि–पदादि–संयोग–अवग्रहेषु यकारस्योच्चारणं जकारः भवति इति विषयं समीचीनतया प्रतिपादयति इयं शिक्षा–

**पादादौ पदादौ च संयोगावग्रहेषु च।**
**जः शब्द इति विज्ञेयो योऽन्त्यः स य इति स्मृतः॥**[21]

एतदतिरिच्य माध्यन्दिनी शिक्षा, वर्णरत्नप्रदीपिका शिक्षा, केशवी शिक्षा, हस्तस्वरप्रक्रिया, अवसाननिर्णयशिक्षा, स्वर–भक्तिलक्षणपरिशिष्टशिक्षा, क्रमसन्धानशिक्षा, मनःस्वारशिक्षा, यजुर्विधानशिक्षा, स्वराष्टकशिक्षा, क्रमकारिकाशिक्षा, भारद्वाजशिक्षा, व्याजशिक्षा, शम्भुशिक्षा, कौहलीयशिक्षा, सर्वसम्मतशिक्षा, आरण्यशिक्षा, सिद्धान्तशिक्षा, माण्डूकीशिक्षा च वर्तन्ते। परन्तु अतिविस्तरभयादत्र एतेषां विवरणं नैव प्रस्तूयते।

अस्माकं वर्णमाला वैदिकी छान्दसी वा विद्यते। अत एव अस्मदीया आन्तरिकी संरचना छान्दसी मन्यते। वर्णानां शुद्धोच्चारणेन छान्दसान्तरात्मा शुद्धरूपं प्राप्नोति तस्माच् च अशुद्धीनां कल्मषमपगच्छति। उच्चारणस्य माहात्म्यं द्योतयितुमेव मन्ये पाणिनीयशिक्षायां 'ब्रह्मलोके महीयते' इति वाक्यं त्रिधा प्रयुक्तम्।

भारतस्य यथा भौगोलिकं वैशाल्यं वर्तते तथैव भाषिकं वैविध्यमपि। तस्मात् क्षेत्रीयभाषा-प्रभावात् विविधेषु प्रदेशेषु वर्णोच्चारणं भिद्यते। अत एव अद्यत्वे शिक्षाशास्त्रस्योपयोगिता विशेषतया अनुभूयते। परन्तु दौर्भाग्यं नाम वेदाङ्गशिक्षाविषयकाः मौलिकग्रन्थाः साम्प्रतं विरलायन्ते। अस्यां कष्टदशायां एनां प्राचीनां महत्त्वभूतां परम्परां पुनरुदनयदाचार्यः अवस्थी बच्चूलालो ज्ञानोपाह्वः। अवस्थिमहोदयः सागरविश्वविद्यालये प्राध्यापकत्वेन सेवाकार्यमकरोत्। तदनु उज्जयिन्याम् आचार्यकुले अधिष्ठातृरूपेण सारस्वतसाधनारतः आसीत्। पाणिनीयशिक्षायाः सर्ववेदोपकारकत्वमभिज्ञाय तेन त्रिनयनभाष्यं प्रणीतम्। ग्रन्थेऽस्मिन् षष्टिः कारिकाः सन्ति। ताश्च एकादशसु भागेषु विभक्ताः वर्तन्ते–

**अथ शिक्षामात्मोदात्तश्च हकारं स्वराणां यथा।**
**गीत्यच्चोऽस्पृष्टोदात्तं चाषस्तु शङ्कर एकादश॥**[22]

अवस्थिमहोदयेन बहुषु प्रौढविषयेस्वपि अतीव सरलतया सहजतया च स्वीयं मतमुपस्थापितम्। तेषां कानिचन उदाहरणान्यत्र प्रस्तूयन्ते।

वर्णानां सङ्ख्यामुद्दिश्य महर्षिणा पाणिनिना त्रिषष्टिश्चतुषष्टिर्वा वर्णाः इति उक्तम्। तद्यथा–

**त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाः शम्भुमते मताः।**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा॥**[23]

त्रिनयनभाष्ये सन्दर्भेऽस्मिन् अवस्थिवर्येण उच्यते– कतिसंख्या वर्णाः सन्तीत्याह त्रिषष्टिश्चतुःषष्टिर्वेति। तेषां वर्णानां परम्पराया अनादित्वं ब्रुवाण आह–ते वर्णाः शम्भुमते मता इति। कुत्र ते वर्णाः प्रयुज्यन्त इत्याह–प्राकृते संस्कृते चापीति। प्राकृतमिह खलु वैदिकं वचः, तत्र हि व्याकरणशास्त्रीयाः संस्कारा न प्रभवन्तीति कृत्वा प्रकृत्यैव निष्पन्नम्। यमाः संस्कृते न प्रयुज्यन्त इति मनसिकृत्य चापीत्युक्तम्। कल्पादौ स्वयम्भुवा ब्रह्मणा स्वयमेव प्रोक्ता इमे वर्णा इत्याचार्यपरम्परा सूचिता। चतुःषष्टिः संख्या प्लुतं ऌकारमपि गृहीत्वा भवति। ननु दीर्घमपि ॡकारं नाट्यशास्त्रीयाः पठन्ति तत् पञ्चषष्ट्या वर्णैर्भाव्यमिति चेद्, भगवान् पाणिनिरप्याह–

**'यदृच्छाशब्देऽशक्तिजानुकरणे वा यदा दीर्घाः स्युस्तदाष्टादशप्रभेदं ब्रुवते क्लृपक इति।'**[24]

क्वचित् स्वैरं नाम कुर्वन्ति, क्वचिच्च शास्त्रोक्तोच्चारणशक्तिरहिता असाधूच्चारयन्ति, तत्र दीर्घोऽपि ॡकारः सम्भवति किन्तु वेदे संस्कृते च नैव तदुपयोग इति।

अत्र दुःस्पृष्ट एक एव गणितः। स च स्वरयोर्मध्ये डकारस्थाने ळ इति, ढकारस्थाने च ळ्ह इति। यथा ईडे–ईळे, मीढुषे–मीळ्हुषे इति। तथा च प्रातिशाख्यमपि प्रतिपादयति–

**द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकारः।**
**ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्तः॥**[25]

अत्र ळकार एवोष्मणा हकारेण संयुक्तः सन् ळ्हकारो भवतीति न वर्णद्वयं गण्यते इति समाधानं प्रयच्छति आचार्यः बच्चूलाल अवस्थी।

एवमेव विसर्गविवेचनसन्दर्भे महर्षिः पाणिनिः तस्य अष्टविधगतिं प्रतिपादयति–

**ओभावश्च विवृत्तिश्च शषसा रेफ एव च।**
**जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः॥**[26]

ऊष्मण इति विसर्गस्याष्टविधा गतिर्भवति। अत्र अवस्थिमहोदयेनोच्यते– नवमी च सा विसर्ग एवेति स्वरूपस्थत्वेन न गण्यते। कास्ता गतयः? इति प्रश्ने कृते उत्तरं भवति– (1) ओभावो यथा शिवोऽर्च्यः, शिवो वन्द्यः। (2) विवृत्तिः स्वरद्वयस्य सहवर्तिता यथा राम आयाति, कृष्ण एति। (3) शकारो यथा रामश्चिनोति। (4) षकारो यथा धनुष्टङ्कारः।

( 5 ) सकारो यथा सन्तस्तरन्ति। (6) रेफो यथा हरिर्गच्छति। (7) जिह्वामूलीयो यथा रामः करोति। (8) उपध्मानीयो यथा वृक्षः फलतीति।।

ननु गङ्गोदकमित्यादिषु विसर्गप्रसङ्गं विनापि सन्धौ सत्योभावो दृश्यते। कथं ज्ञायेत यदयमोकारो विसर्गस्येति? तदाह–

**यद्योभावप्रसन्धानमुकारादिपरं पदम्।**
**स्वरान्तं तादृशं विद्याद् यदन्यद् व्यक्तमूष्मणः।।**[27]

यत्र पदे परं पदमुकारादि भवेत् तत्र यदि ओभावप्रसन्धानं स्यादोकारात्मकसन्धिपरिज्ञानं भवेत् तदा तादृशमोकारं स्वरान्तं स्वरस्थानीयं स्वरान्तपदेन सहैकादेशजन्यं विद्यात्। ततो यदन्यदोभावप्रसन्धानं स्यात् तद्व्यक्तं स्पष्टमेवोष्मण ओभावं विद्यादिति।

तथा च विसर्गस्योच्चारणे केचन हकारमपि योजयन्ति। परन्तु तदसङ्गतमिति। तथ्यमिदं समर्थयन् त्रिनयनभाष्यकारः याज्ञवल्क्यशिक्षामुद्धरति। तन्मतेन यथा लघुचेतसः बालस्य सर्पस्य निःश्वासो विना आयासं भवति तथैव हकारस्य योजनं विनैव विसर्गोच्चारणे उष्मा प्रयोक्तव्या–

**यथा बालस्य सर्पस्य निःश्वासो लघुचेतसः।**
**एवमूष्मा प्रयोक्तव्या हकारपरिवर्जिता।।**[28]

एवमेव हकारस्य विषयेऽपि लोके बहुविधभ्रान्तिः दृश्यते। तत्र महर्षिपाणिनिः निगदति–

**हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्।**
**उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्।।**[29]

स्वीयभाष्ये आचार्यः प्रतिपादयति–

ननु व्यवहारे कण्ठादारभ्यैव स्थानव्यवस्थानं लभ्यते। कथमुरो निवेश्य स्थानानामष्टकं परिगणितम्? सूत्रमेकदेशीयमतेनैवाम्नातम्–

**'हविसर्जनीयावुरस्यावेकेषाम्।'**[30]

इत्यत्रापि नैकमत्यम्। एतन्मनसि निधाय विविनक्ति। संयुक्ताक्षरेषु सर्वत्र हकारस्य पूर्ववर्तितैव संस्कृते समुपलभ्यते – णनमा यरलवाश्च तत्र तत्र परघटका एव– ह्ण, ह्न, ह्म, ह्य, ह्र, ह्ल, ह्व इति। इत्थं च संयुक्तासंयुक्तत्वेन द्वैधं हकारस्य। असंयुक्तोऽसौ कण्ठ्य एव संयुक्तश्चोरस्य एवेति विवेकः पाणिनीयानाम्। पञ्चमैर्णनमैरन्तस्थाभिर्यरलवैश्च संयुतंहकारमुरस्यं विजानीयात्, असंयुतं च तं कण्ठ्यं विजानीयादित्यन्वितार्थः।

तत्र पूर्वाह्ण–चिह्न–ब्रह्म–बाह्य–ह्रद–ह्लाद–प्रह्व–प्रभृतिषु हकारस्योरः–स्थानम्, अन्यत्र विहारादिशब्दस्वरूपेषु कण्ठं स्थानमिति तत्त्वम्।

वर्णोच्चारणार्थं तेषामुच्चारणस्थानस्य संज्ञानमतीवानिवार्यं भवति। वर्णोच्चारणस्थानं विवृण्वन् पाणिनिः स्वकीयशिक्षायां निर्दिशति–

**कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू।**
**स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः॥**
**जिह्वामूले तु कुः प्रोक्तो दन्तोष्ठ्यो वः स्मृतो बुधैः।**
**ए ऐ तु कण्ठतालव्यावो औ कण्ठोष्ठजौ स्मृतौ॥**[31]

अकारः असंयुक्तो हकारश्चेति कण्ठ्यौ वर्णौ। इकारश्चवर्गो यकारः शकारश्चेति तालुस्थानीयाः। उकारः पवर्गश्चेति ओष्ठस्थानजन्यौ। ऋकारष्टवर्गो रेफः षकारश्च मूर्धन्याः। लृकारस्तवर्गो लकारः सकारश्च दन्तोद्भवाः। कवर्गो जिह्वामूलस्थाने निष्पद्यते। वकारो दन्तोष्ठजः। एकारैकारौ कण्ठतालव्यौ। ओकारौकारौ कण्ठोष्ठजाविति।

त्रिनयनभाष्यं अत्र तथ्यमिदं विशेषतया प्रकाशयति–

(क) जिह्वामूलीयोपध्मानीययोरत्र स्थाननिर्देशो न कृतः क पौ चापि पराश्रितौ इत्युक्तदिशा तयोः क्रमेण जिह्वामूलमोष्ठौ च स्थाने भवतः। कखयोः प्राग् जिह्वामूलीयस्य प्रयोगः, कखौ च जिह्वामूलोद्भवौ। पफयोः प्रागुपध्मानीयः प्रयुज्यत इति ओष्ठजत्वं तस्य स्पष्टम्।

(ख) कवर्गस्येह जिह्वामूलं स्थानमुपदिष्टम्। अत्र प्रातिशाख्यम्–

**'ऋकारल्कारावथ षष्ठ ऊष्मा जिह्वामूलीयाः प्रथमश्च वर्गः।'**[32]

इह षष्ठ ऊष्मा विसर्गः। प्रथमो वर्गः कवर्गः। अनयो ऋकारलृकारयोश्च जिह्वामूलं स्थानमुपदिश्यते। शिक्षासूत्रमन्यथैव ब्रूते–

**'अकुहविसर्जनीयाः कण्ठ्याः। हविसर्जनीयावुरस्यावेकेषाम्। जिह्वामूलीयो जिह्व्यः। कवर्गावर्णानुस्वारजिह्वामूलीया जिह्व्या एकेषाम्।'**[33]

अथापि नाट्यशास्त्रम् उच्चारणसन्दर्भे स्वीयमभिप्रायमित्थं प्रकटयति–

**'अकुहविसर्जनीयाः कण्ठ्याः। इचुयशास्तालव्याः। ऋटुरषा मूर्धन्याः। लृतुलसा दन्त्याः। उपूपध्मानीया ओष्ठ्याः। विसर्जनीय औरस्य इत्येके।'**[34]

इत्थं वैमत्ये सति कवर्गस्योभयमपि स्थानम्। कण्ठजिह्वामूलयोः प्राय एकत्र स्थितेः। जिह्वामूलीयस्य तु जिह्वामूलमेव स्थानम्। तस्य पराश्रितत्वेन ककारस्थानतुल्यतेति।।

पाणिनिः द्विविधपाठकानां वर्णनं विदधाति। सः पाठकानां षण्णां दोषाणां षण्णां च गुणानां प्रदर्शनं करोति। अपि च निकृष्टान् पाठकान् वर्णयन् सः कथयति –

**गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।**

**अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥**[35]

यो गायन् पठति स गीती, यथावत् पाठ्यं कर्तुमप्रभवन् गानेन क्षतिं पूरयितुमीहते तादृशः। शीघ्रपाठशीलः शीघ्री, यश्चर्वन्निव वर्णान् पठति त्वरयाऽनुद्रुत इव। शिरः कम्पयति तच्छीलः शिरःकम्पी, अथवा शिरसः कम्पः शिरःकम्पोऽस्ति यस्य सः, शिरो धुन्वन् पठति। तथा लिखितपाठकः, पठितुं न जानानोऽपि लिखितमेव कथञ्चित् पठितुं यतते, तावतैव कृतकृत्यम्मन्यः। अर्थं जानातीति अर्थज्ञः, नार्थज्ञ इत्यनर्थज्ञः, यो नाम पठन्नपि नार्थं संक्रामयितुं प्रभवति, अस्थाने विरामं छेदं वा करोति। अल्पकण्ठश्च यस्य वाग्यन्त्रमेव तथा स्वल्पं भवति यथा श्रोतारं क्लिश्नाति कर्णयोः। एते षट् पाठकेषु अधमा भवन्ति। दोषाभावो गुणो भवति।

वर्णानामुच्चारणसन्दर्भे महर्षिणा पाणिनिना उक्तं यत् पतनभेदाभ्यां भीता व्याघ्री यथा दंष्ट्राभ्यां पुत्रान् हरेत्, न च पीडयेत्, तद्वद् वर्णान् प्रयोजयेत्।

**व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत्।**

**भीता पतनभेदाभ्यां तद्वद् वर्णान् प्रयोजयेत्॥**[36]

व्याघ्री (मार्जारी वा) तीक्ष्णाभ्यामपि दंष्ट्राभ्यां स्वशावकान् हरन्ती तथावहिता भवति यथा शिशोः पीडा न भवेत्, न च पतेत्, न वा भिद्येत। तथैव वर्णान् प्रयुञ्जानो वर्णान् न पीडयेत्, न पातयेत्, न वा भिन्द्यात्। वर्णानामस्पष्टतैव पातः, विकृतोच्चारणं च भेदः। ताभ्यां भीतभीतेनोच्चारयित्रा सावधानेन भवितव्यमिति भावः।

शुद्धोच्चारणार्थं शब्दब्रह्मणः महिमानमुपस्थापयता महर्षिणा पाणिनिना इतोऽप्युक्तम्–

**एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः।**

**सम्यग् वर्णप्रयोगेण ब्रह्मलोके महीयते॥**[37]

इत्थमत्रोक्तरीत्या वर्णाः प्रयोक्तव्याः। ते चोच्चारणकाले नाव्यक्ताः स्युः, तथा सति सम्यक् श्रवणस्यैवाभावः प्रसज्यते। न वा ते पीडिता घृष्टाः स्युः, तथात्वे वैरस्यापत्तेः। पीडनं चाग्रे वक्ष्यते। इत्थं सम्यग् वर्णानां प्रयोगेण प्रयोक्ता ब्रह्मलोके महीयते पूज्यते। ब्रह्मलोके महीयत इति कार्यब्रह्मणो लोके पूज्यत इत्यर्थः। निर्गुणस्य ब्रह्मणो लोकेन सह तु विरोध इति कार्यब्रह्मणो ग्रहणम्। स एव ब्रह्मा इत्युच्यते। तस्यैव शक्तिः सरस्वती। यावद्

ब्रह्माऽवतिष्ठते तावत्तल्लोके महीयत इति भावः। ब्रह्मणो द्विपरार्धावसाने तेनैव सह मुच्यत इति परमार्थः। क्रममुक्तेरयं पन्थाः। सम्यग्वर्णप्रयोग एव शब्दब्रह्मण उपासना। 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इति श्रुतेः। फलश्रुतिः पुरुषार्थं परमप्रयोजनरूपं व्यनक्ति। याज्ञवल्क्यशिक्षायामपि माधुर्यत्वं सुव्यक्तत्वं पीडनाभावत्वं च वर्णोच्चारणगुणत्वेन उक्तानि–

**'मधुरं चापि नाव्यक्तं सुव्यक्तं न च पीडितम्।'**

वस्तुतस्तु उच्चारणं पाठशुद्धता चेत्येव शिक्षाशास्त्रस्य प्रतिपाद्यं वर्तते। अशुद्धपाठेन कथ्यं स्पष्टं न भवति। पद्मपुराणकारः सार्थकं पाठमुत्तमं मनुते –

**उत्तमं सार्थपाठं च मध्यमं च निरर्थकम्।**
**विनार्थं शुद्धपाठश्चेदुत्तमेन समं भवेत्॥**[38]

इत्थं समग्रतया परिशीलनेन ज्ञायते यद् आचार्येण बच्चूलाल अवस्थी-महाशयेन प्रणीतं पाणिनीयशिक्षायाः त्रिनयनभाष्यमिदं शिक्षापरम्परासंवर्धने सर्वतोभावेन क्षमं वर्तत इति।

*

## सन्दर्भाः


1. पाणिनीयशिक्षा, श्लोकः 41-42
2. संस्कृत वाङ्मय का बृहत् इतिहास, खण्ड 2, भूमिकायाम्
3. पाणिनीयशिक्षा, 52
4. तैत्तिरीय 1-2
5. पा. शि. 33
6. षोडश. शि. 1,16
7. तत्रैव 13
8. शैशिरीयशिक्षा, श्लोकः 4
9. शै. शि.
10. सं. सा. बृ. इति द्वि.ख., पृ.37
11. सं. सा. बृ. इति, द्वि.ख., पृ.38
12. लो. शि. श्लोकः 1
13. तत्रैव

14. नारदीयशिक्षा 1.3
15. तत्रैव 1.3-3
16. याज्ञ. शि. 1.18
17. पारा. शि. 66-68
18. पारा. शि. 135-136
19. माण्ड., शि. 1
20. अमोघा. शि. 123–126
21. लघु अमोघा. शि.
22. त्रिनयनभा., पृ. 81
23. पा. शि. 3
24. पाणिनीयशिक्षासूत्रम्, वृद्धपाठः 6.6
25. ऋग्वेदप्रातिशाख्यम् 1.52
26. पा. शि. 14
27. तत्रैव, श्लोकः 15
28. याज्ञ. शि. 74
29. पा.शि., श्लोकः 16
30. आपिशलशिक्षासूत्रम् 1.3
31. पा. शि.17-18
32. ऋग्वेदप्रातिशाख्यम् 1.41
33. पाणिनीयशिक्षासूत्राणि 1.2–5
34. नाट्यशास्त्रम् 14.11
35. पा. शि. 32
36. पा. शि. 25
37. पा. शि. 31
38. हरिवंशमाहात्म्यम् 1.21-22

*

# अकथितं किञ्चित् : एका अन्तर्यात्रा

**डॉ. शैलेशकुमारमिश्रः**

मानवमानसस्य याः अभिव्यक्तयः वैखर्यां समुद्भवन्ति ततोऽधिकाः मध्यमायामेव तिष्ठन्ति। मनश्चाञ्चल्यात् अपरिमिताः मनोभावाः हृदये समुद्भवन्ति किन्तु लोकमर्यादा-ऽतिक्रमणभयात् स्वभावगतसंकोचकारणाद्वा कस्यापि मनुष्यस्य मनोभावाऽधिकांशः मनसि एव तिष्ठति। एतदेवाधिकृत्य उपन्यासकारः कथयति यत् 'अकथितमेव कथितमतिशेते।'[1] प्रो. गोपबन्धुमिश्रप्रणीतं 'अकथितं किञ्चित्' नाम गद्यकाव्यम् अभिज्ञानशाकुन्तलगतानां पात्राणामकथितमनोभावान् साक्षात्करोति। सत्यमिदं प्रतिभाति यत् अकथितवचांसि कथितवचोभिः महत्त्वातिशयं सौन्दर्योत्कर्षं भजन्ते।

ये खलु सामान्यजनाः सन्ति ते तु कस्यापि कथितमेव शृण्वन्ति जानन्ति च किन्तु सहृदयमनोयात्रिणः साहित्यिकाः कस्यापि कथितसोपानमारुह्य तस्यान्तस्तलनिगूढम् अकथितमपि साक्षात्कुर्वन्ति। ते वैखरीमनुसृत्य हृदयस्थमध्यमावाक्स्पन्दनमपि अनुभवन्ति। एतत्कृते ते वक्तुर्भावधारायां विनिमग्नो भूत्वा तदात्मानुप्रवेशं कुर्वन्ति। अभिनवभारत्यां महामाहेश्वराचार्यः श्रीमदभिनवगुप्तपादः एवं वदति-

''यथा हि कर्कशकर्करानिकरकण्टकिते देशे दुस्संचरे संचरन्तं जनं पश्यन्त्या अपि सुकुमारहृदयायाः प्रमदायास्तदात्मानुप्रवेश इव जायमानं खेदमतितरामादत्ते प्रहारपातादौ वा तथा सहृदयस्य स एव मार्गः सुकुमारता हि वैमल्यापरपर्यायसहृदयत्वे हृदयस्य हि कविहृदयतादात्म्यापत्तियोग्यतैव उत्कर्षः।''[2]

आत्मानुप्रवेशतयैव परहृदयगतवेदनामनुभवितुं शक्यते। वाल्मीकित्वमवाप्यैव क्रौञ्च्याः वेदना हृदयेऽवतारयितुं शक्यते। एष एव व्यथितहृदयजनरचनाकारयोः सख्यभावो वर्तते। येषां वाचि भद्रा लक्ष्मीः सन्निहिता भवति त एव सख्यभावमिमं लभन्ते –

**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि।**[3]

शकुन्तलादुष्यन्तकण्वगौतमीप्रियंवदाऽनसूयादीनां हृदयेऽप्रकटिता ये भावाः आसन् रचनाकारेण तेषां प्रत्यक्षीकरणं कृतमत्र 'अकथितं किञ्चित्' इत्याख्ये गद्यकाव्ये।

शाकुन्तलीयपात्राणामात्मानुप्रवेशं विना नैष भावसाक्षात्कारः संभवः आसीत्। भवभूतिप्रोक्तदृशा समानधर्मा एव कश्चित् शकुन्तलायाः मनोव्यथां कण्वस्य करुणां वाऽवगन्तुं शक्नोति। रहस्यरूपात्मकस्यास्य प्रतीयमानार्थस्य उन्मीलनं कस्यापि विगलितहृदयस्य सहृदयस्य शब्दब्रह्मोपासकस्य समक्षमेव भवति यत्र वाणी स्वीयमशेषं रहस्यं प्रकटयति –

**उतो त्वस्मै तन्वं विसस्त्रे जायेव पत्ये उशती सुवासाः।**[4]

नाट्यशास्त्रीयरीत्या यत्स्वगत इत्यभिधीयते तथैव उपन्यासोऽयं शाकुन्तलीयपात्राणामेकालापो वर्तते यत्र शकुन्तलाप्रत्याख्यानव्यथितहृदयाः सर्वे पश्चात्तापमनुभवन्तः स्वीयं मनोगतं प्रकटयन्ति।

भगिनीं शकुन्तलां हस्तिनापुरं प्रापयन् क्रोधाविष्टः शार्ङ्गरवः तीक्ष्णवाचा दुष्यन्तं भर्त्सयन् कथयति–

**तदेषा भवतः कान्ता त्यज वैनां गृहाण।**[5]

कथनानन्तरं स अनुभवति यत् तस्य परुषवचोभिरेभिः शकुन्तला अपि व्यथिता स्यादिति। आश्रमनियमपालनतत्परः आत्मनिरीक्षणपरः एष ब्रह्मचारी सत्यवादी स्पष्टभाषी च वर्तते। मेधागोकर्णतनयः वरुणः धनुष्टंकारसदृशस्वीयगभीरकण्ठध्वनिप्रभावात् महर्षि-कण्वेन शार्ङ्गरव इति नाम्नाऽभिहितः। शार्ङ्गस्य रव इव रवो यस्येति नामकरणस्य इदमकथितमाख्यानं रचनाकारस्य भावभूमौ समुद्भूतम्। तथैव शरत्पूर्णिमायां लब्धजनिः वटुः शारद्वत इत्यभिहितः गुरुणा। स शार्ङ्गरव इव कठोरभाषी नास्ति। रचनाकारः इदं निरीक्षते यत् शारद्वतस्य वाचि शारदीयपूर्णिमायाः अमृतवर्षिणी ज्योत्स्ना उच्छलति अत एव स शकुन्तलां प्रति शार्ङ्गरवस्य परुषव्यवहारात् क्षुब्धः व्यथितश्च वर्तते–

''शार्ङ्गरवस्तु अग्निना दग्धं काष्ठखण्डमिव कोपेन ज्वलितगात्रः यत् किमपि पुरतः प्राप्तं तस्य इष्टत्वानिष्टत्वे अविविच्य एव सर्वं प्रज्वलयितुं प्रावर्तत ... ... आस्माकीना भगिनी अपि दग्धीभूतेव समजायत।''[6]

दुष्यन्तस्य व्यवहाराद् विक्षुब्धः स कथयति यत् राजनीतौ छलो वर्तते किन्तु आत्मीयसम्बन्धेषु सर्वथाऽनुचितः खल्वेषः –

राजनयेषु छलस्यापि स्थानं विद्यते किन्तु स नयः केवलम् इतरराजभिः सहाचरणीयो वर्तते। एतेन तु आत्मना सह छलो विहितः।[7]

सरलहृदयः शारद्वतः सशंकितः वर्तते यत् आश्रमं प्रतिनिवर्त्य स कथमिदं दुर्भाग्यपूर्णं वृत्तं गुरवे निवेदयिष्यति–

**किं प्रक्ष्यतीति परिशंकत एव आत्मा। किं द्रक्ष्यतीह मलिने मुखमण्डले मे।।**[8]

मातुः समीपं गच्छेयं वा कुत्राप्यन्यत्र गन्तव्यमिति विचारयतः किंकर्तव्यविमूढस्य शारद्वतस्य अन्तःकरणमेव समादधाति –

**नान्योऽस्ति ते शरणं गुरुं विनैव।**[9]

स्वीयजनन्या परित्यक्ता शकुन्तला यस्याः स्नेहोत्सङ्गे पोषिता वर्धिता सा खलु गौतमी वर्तते। शकुन्तलामवाप्य तस्या अपि नारीसुलभं मातृत्वं जागर्ति स्नेहशीकरस्तस्याः उच्छलति। शकुन्तलाप्रत्याख्यानात् विकलहृदया गौतमी व्यथापारावारनिमग्ना सती स्मृतिपथगतागतान् प्रसङ्गान् स्मरन्ती विलपति –

''हा पुत्रिके! क्व ते सुखकल्पना क्व च एषा प्रतारणा? शिशुः शकुन्तला–लघुः कृष्णः केशराशिः लघुनी नेत्रे किञ्चिदुन्नता नासिका।''[10]

मातृत्वं साक्षादननुभवन्त्यपि गौतमी शकुन्तलायाः मातृत्वमवाप्य अतीव हर्षिता सती वदति –

**मातेति नाममहिमा प्रथितो हि लोके।**
**स्वर्गेऽपि दुर्लभमिदं कथितं पुराणैः।।**[11]

क्रमेण शैशवकैशोर्ययौवनसोपानमारोहन्त्याः शकुन्तलायाः जीवनक्षणं सततं निर्वर्णयन्ती गौतमी अपि शारद्वत इव किंकर्तव्यविमूढा महर्षिकण्वाय दुःसहमिदं वृत्तान्तं निवेदयितुम् अक्षमा दृश्यते –

**कुत्रास्ति साश्रमसुता किमभूद् गता क्व।**
**प्रश्नान् कथं प्रतिवदेयमितीह चिन्ता।।**[12]

गौतम्याः दशेयं नैषधीयचरितगतस्य हंसस्य विलापं स्मारयति –

**मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते।**
**विलोकयन्त्या रुदताऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः।।**[13]

शकुन्तलायाः दुर्दशामाकर्ण्य तस्याः व्यथितहृदयं सखीद्वयं कथमपि जीवनं धारयति–

यदि चेत् केवलं श्वसनमेव जीवनं तर्हि तु जीवाम्येव। किन्तु मदन्तः निखिलं रिक्तम्।।[14]

एतादृशि मर्मच्छिन्नैराश्यक्षणे सख्यस्य आवश्यकता भवति विशेषतः एतादृशीनां कण्ठाश्लेषप्रणयिनीनां सखीनाम्। हा हन्त घोरेऽस्मिन्क्षणे तयोः सखी दृक्पथादपि दूरे तिष्ठति। अनसूया स्वसखीभाग्यगतां समस्तदुरितापहरणाय सहृदयहृदयहारिणीं वाचमिमां

निगदति–

**पुण्यं ममास्ति यदि किंचन सञ्चितं हि भावोऽस्ति कश्चन यदि प्रसुप्ताख्यः।**
**सख्याः समस्तदुरितं मम भाग्यमायात् प्राप्नोतु सेष्टसकलं स्वपतिं स्वपुत्रम्॥**[15]

सख्यभावस्य पराकाष्ठा खल्वियं रचनाकारेण परिकल्पितः। प्रियंवदायाः हृदये भावोर्मीणां यादृशं चाञ्चल्यं वर्तते तत्खलु सरलहृदयायाः युवत्याः हार्दिकीं व्यथां प्रकटयति–

"किं दत्तवचनरूपः शब्दः स्वप्रामाण्यम् अजहात्? किं चतुर्णां चक्षुषाम् आन्तरिकं मेलनं किमपि एकम् अङ्गुलीयकतुल्यं तुच्छं वस्तु आत्मदर्शनाय प्रतीक्षते? ... आन्तरिकं अनुभूतिचयं ज्ञातुं ज्ञापयितुं वा किमपि लौकिकं प्रमाणमेव पुरस्क्रियते?"[16]

निश्चयेन प्रेम अभिज्ञानाश्रितं नैव भवति। प्रेमाभिव्यक्तये शब्दा अपि समर्थाः न भवन्ति। एषा प्रेमसरित् खलु गूढान्तस्तले प्रवहति हृदयस्य अकथितसंवादश्च वर्तते। उर्वशी इत्याख्ये स्वीये काव्ये कविवरो दिनकरः एवं वदति –

**देह प्रेम की जन्मभूमि है पर उसके विचरण की**
**लीलाभूमि नहीं सीमित है रुधिर त्वचा तक**
**यह सीमा प्रसरित है मन के गहन गुह्य लोकों में**
**जहाँ रूप की लिपि अरूप की छवि आँका करती है॥**[17]

अकथितं किञ्चित् इत्यस्य शकुन्तला प्रकृत्या किञ्चिद्भिन्ना एव। तस्याः व्यक्तित्वे देवत्वं संस्थापितं कृतिकारेण। अनुरागलीलायै किं वा निश्छलप्रेमस्वरूपं दर्शयितुं शकुन्तला देवलोकात् सुरसरिदिव इहलोके अवतीर्णा। देवांशधारिणी शकुन्तला सर्वथा निरहङ्कारिणी अनभिमानिनी सरलतयाश्च प्रतिमूर्तिः वर्तते। प्रो. मिश्रवर्येण शकुन्तलायाः निर्दोषत्वं सिद्धम्–

'सा तु न तं तपोनिधिम् अपि तु तपोवनम् आत्मानं ... निखिलं च संसारं किमपि न वेत्ति स्म। यदि सा किमपि न वेत्ति एव तर्हि तादृशतपोनिधेः उपस्थितिमपि न वेत्तीत्यत्र पक्षपातदोषः कथमुत्पद्येत?'[18]

वस्तुतः प्रेम्णः अवस्था हृदयदृशा विचारणीया वर्तते न तु बुद्ध्या चिन्तनीया। दुर्वाससा बुद्ध्यैवात्र विचारितम्। निश्छलप्रेमदशा खलु आत्मविस्मृतिदशेव वर्तत यत्र निखिलं जगत् तिरोभवति। निश्छलप्रेम एतत् पाषाणखण्डे समुत्कीर्णा शाश्वती रेखा वर्तते। दुर्वाससः उग्रतायाः तीव्रवात्याचक्रोऽपि तामपाकर्तुमक्षमः। दुर्वाससः अन्तःसमुत्थितं तर्कमुपस्थापयता उपन्यासकारेण कथितम् –

कामम् आश्रित्य यः धर्मम् उपेक्षते सः कोऽपि भवतु विधिना दण्ड्यो भवति।[19]

अतिथिसत्काररूपधर्मस्य उपेक्षया क्रुद्धः दुर्वासाः शकुन्तलां कामाश्रितां कथयति। इदमत्रावधेयं स्यात् यत् निश्छलो निष्कामश्च प्रणयः कथं कामाश्रितो वर्तते? किं शकुन्तलायाः यौवनसुलभोऽयं प्रणयः धर्मानुकूलो न वर्तते। महामुनिर्व्यासो वदति –

**धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते।**[20]

किमत्र दुर्वाससः मनसि स्वीयसत्कारकामना नैव वर्तते? अपूर्णायां कामनायां क्रोधः अजायत –

**कामात् क्रोधोऽभिजायते।**[21]

मेघदूतस्य कुबेरः शाकुन्तलस्य दुर्वाससा साम्यं भजते। द्वयोर्हृदये प्रणयिहृदयानां कृते आत्मीयभावो न वर्तते। द्वयोरपि दण्डविधानं सर्वथा अनुचितं प्रतीयते। अत्र आत्मीयभावपरिपूर्णा प्रियंवदा परदुःखकातरतायामेव मानवजीवनस्य सार्थक्यं पश्यन्तीत्थं वदति–

'अतः सर्वदा आत्मनः एव सुखं कामयमानमिदं चित्तमद्य कस्यचिद् अपरस्य कृते दूयते इत्येतद् मे मानवजीवनस्य सार्थक्यमिति प्रतिभाति।'[22]

उपन्यासे चित्रितस्य महर्षिकण्वस्य अकथितमेव सर्वाधिकं वर्तते यतो हि त्रिकालद्रष्टा महर्षिः अनुभूतिमशेषां वैखर्यामेव न प्रकटयति। रचनाकारः तस्य अंतःकरणमतिशयेन मथ्नाति अत एव उपन्यासे सुदीर्घतरः आत्मालापः तस्यैव वर्तते। संसारमायानासक्तः संन्यस्तोऽपि स महर्षिः करुणादयास्नेहादिभावाद्रिक्तो नैव वर्तते–

'आश्रमजीवनमपि इदं यद्यपि असङ्गम् अस्ति तथापि नेदं निस्सङ्गम् .... अशब्दम् अस्पर्शम् अरूपम् अगन्धं च तत् परब्रह्म जिज्ञास्यमानमपि पूर्णतः निश्शब्दं निस्स्पर्शं नीरूपं नीरसं निर्गन्धं नैव तिष्ठति।'[23]

कण्वस्य आश्रमजीवनं सदसदनिर्वचनीयं वर्तते यत्खलु संसारमायाऽलिप्तोऽपि सर्वथा निर्लिप्तो नैवास्ति। अपूर्वसौन्दर्यधनधारिणीशकुन्तलायाः बाह्यमन्तस्सौन्दर्यं च साक्षात्कुर्वता उपन्यासकारेण कण्वमुखादिदं निगदितम् – 'एकस्मिन् आधारे देवर्षयोः तेजोद्वयम्! दैवं ज्योतिः आर्षा प्रतिभा च ! अनुपमा सामान्या अकल्पनीया चेयं तनया इदानीं मम सुता? मदीयस्य संन्यासिनः कन्या 'कण्वसुता।'[24]

संतानपरित्यागदोषाद्विमुक्तीकृता मेनका अत्र उपन्यासकारेण। तस्य तर्कोऽयं विद्यते यत् विश्वामित्रः तां स्वपार्श्वे स्थातुं नानुमन्यत न चेमां कन्यां सा स्वर्गलोके नेतुं क्षमा आसीत्।

आश्रमपरिवेशं तज्जन्यं संस्कारं च वर्णयता रचनाकारेण सूक्ष्मदृष्ट्या शब्दयोजना कृता –

'आश्रमद्वारमिदम्। अत्र प्रवेष्टारं द्वारमिदं द्वन्द्वातीतं करोति तस्मिन् वीतस्पृहताम् आनयति ... ... समीहां नियम्य अनीहां जनयति तन्मनसि जनारण्यं प्रति अरतिम् उत्पादयति ... प्रवेष्टुः चेतो नोद्विजते न च स लोकमुद्वेजयति ...।'[25]

शकुन्तलायाः दुरवस्थायाः कृते कोऽयं जनः दोषी वर्तते इत्यस्मिन् विषये विचारयन् लेखकः सर्वानपि दोषमुक्तान् कुर्वन् एवं वदति–

**राजाथवा भवतु कोऽपि मुनिः स्वतन्त्रो**
**निर्दिष्ट एव विधिना निखिलं करोति।**[26]

लोकमर्यादातिक्रान्ता अपि राजा लोके वन्दनीयो भवतीति विडम्बना लोकस्य। माधव्यमुखेन शब्दायते एष विचारः उपन्यासकारस्य–

कृत्याकृत्यनिवृत्तिप्रवृत्तिरूपि विपरीतमाचरणं विदधदपि राजा नायकरूपेण पूज्यते इति विडम्बितोऽयं लोकधर्मः।[27]

प्रत्याख्यानेन विपज्झञ्झाप्रताडिते शकुन्तलायाः हृदये कीदृश्यः भावोत्तालोर्मयः समजनिषत इति तस्याः व्यथावारिधौ विनिमज्य तस्याः अन्तस्तलेऽवतीर्य एव कश्चित् ज्ञातुं शक्नोति। शकुन्तलायाः अकथितमिदं भावानुरूपशब्दावल्याम् अतीव कलात्मकदृष्ट्या प्रकटितमत्र लेखकेन–

'अनुरागपुष्पं प्रत्याख्यानवज्रायितम् प्रणयमलयः परिहासझंझावातायितः आशासूर्योदयः अपह्नववारिदायितः विश्वासहंसः अविश्वस्तकाकायितः स्नेहमृगः अपरिचयमृगेन्द्रायितः ... दर्शनम् अन्धायितम् यशः कलुषायितम् ...।'[28]

निश्चयेन 'मृदुनि मृगशरीरे तूलराशाविवाग्निः'[29] इव दुष्यन्तस्य तीक्ष्णवाग्बाणैर्दग्धहृदयादेव एतादृशी व्यथास्वरनिर्झरिणी प्रस्फुटिता। अशेषोपन्यासस्य मर्मस्थलं एष एव परिच्छेदो वर्तते यत्र मनोव्यथामभिव्यञ्जती देशकालावच्छिन्ना शकुन्तला साक्षात् संवादं कुर्वतीव प्रतीयते। उपन्यासकारेण अत्र प्रियतमस्य दुष्यन्तस्य प्रथमदर्शनानुभूतिं वर्णयन्त्याः शकुन्तलायाः सौन्दर्यमयवचोभिः प्रत्याख्यानव्यथा द्विगुणीकृता–

'आर्यपुत्रस्य प्रथमं दर्शनम्! उषसि सूर्यरश्मेः धरायां प्रथमः स्पर्शः ... निर्झरिण्याः प्रथमः प्रपातः चूतमञ्जर्याः प्रथमः स्फोटः भ्रमरस्य प्रथमं गुञ्जनम् ...।'[30]

प्रेम्णः प्रथमसंस्पर्शस्य अनिर्वचनीयानुभूतिः नैकेन उपमानेन तुलयितुं शक्यते।

यक्षिण्याः प्रणयसौन्दर्यमपि नैकस्मिन् उपमाने विनिबद्धम्–

**हन्तैकस्मिन् क्वचिदपि न ते चण्डि सादृश्यमस्ति।**[31]

रचनाकारेणाप्यत्र सैषा अनिर्वचनीया अनुभूतिः प्रकृतिप्रदत्तसौन्दर्योपादानैः विविधैः समर्थशब्दैरभिव्यक्ता। शकुन्तलापरित्यागलाञ्छनेन लोकविनिन्दितायाः मेनकायाः चरित्रं सद्गुणाधानेन परिष्कृतमत्र कृतिकारेण। प्रो. मिश्रः तस्याः व्यथां प्रकटयति एभिः शब्दैः–

**रूपं विहाय निजकामनया प्रवृत्तिरस्मद्गतापि भवतीति न कोऽपि वक्ति।**[32]

तस्याः मुखेनेदं प्रमाणीकरोति लेखकः यन्मर्त्यलोकः सुन्दरतरः अस्ति देवलोकात्–

'अमराणां तु अमरत्वमस्ति किन्तु जीवनं नास्ति। देवलोके मृत्युः नास्ति अतः जीवनमपि नास्ति। असति मरणे जीवनस्य रसः क्व?'[33]

सत्यमियमुक्तिः उपन्यासकारस्य। मृत्युं विना जीवनस्य सरसतां कः अनुभवितुं शक्नोति? सूर्यातपस्य अनुभवं विना शीतलतरुच्छायायाः किं मूल्यम्? हिन्दीभाषायाः प्रख्यातकवयित्री महादेवीवर्मा एतदेव कथयति निजकवितायाम् –

**ऐसा तेरा लोक, वेदना नहीं, नहीं जिसमें अवसाद**
**जलना जाना नहीं, नहीं जाना जिसने मिटने का स्वाद!**
**क्या अमरों का लोक मिलेगा, तेरी करुणा का उपहार**
**रहने दो हे देव! अरे यह मेरा मिटने का अधिकार!**[34]

मेनका विवशा माता वर्तते। विश्वामित्रः तां स्वीयतपोविभ्रंशकारणं मनुते। विश्वामित्रसौहार्दवञ्चिता स्वीयसन्ततिसंरक्षणचिन्ताकुला मेनका आत्मानं पृच्छति यत् गर्भवहनं सन्ततेः पालनं संरक्षणम् एतत्सर्वः संसारभारः केवलं नार्या एव वोढव्यः? मेनकायाः एतद्वचनं इदानीन्तनीनां तासां सर्वासां स्वीयपुरुषस्नेहवञ्चितानां नारीणां स्वरो वर्तते। पश्चाद् विश्वामित्रोऽपि स्वीयक्रूरतां स्वीकरोति –

**क्रूरं ममात्मचरितं परुषां च वाणीम् ...।**[35]

उपसंहारे उपन्यासस्य सूत्रधारमुखेन उपन्यासकारेण संकेतितमिदं यद्यापि शकुन्तलानां प्रत्याख्यानवेदना यथावदेव वर्तते। अहङ्कारिस्वार्थान्धशासकान् शिक्षयन् कृतिकारो वदति–

**राजा यदि प्रथितसत्यपथाभिघाती नूनं भवेत्स पतितः पुरतः प्रजानाम्।**
**भ्रष्टे हि मूलरहिते विपुलेऽपि वृक्षे नैवाश्रयन्त इतरे विहगप्रधानाः।।**[36]

उपन्यासस्य कलापक्षोऽपि भावपक्ष इव सौन्दर्यसम्पूरितः। व्याकरणस्य 'अकथितं च' इत्यस्य व्याख्याकारः यदा साहित्ये हृदयस्थमकथितं समर्थशब्दैः अभिव्यनक्ति तदा 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः' इत्युक्तिश्चरितार्थतामवाप्नोति। भाषासौष्ठवस्य उदाहरणमत्र बाहुल्येन द्रष्टव्यमस्ति। आत्मालापस्य शृङ्खलायामस्याम् अलङ्काराः अपि सौष्ठवेन गुम्फिताः। प्रो. मिश्रेण प्रयुक्तानि उपमानानि नवतां रमणीयतां चावहन्ति –

**कृशतटिनीव सुरसरित्संगतिम् आप्तवत्यहम्।**[37]

आर्यया गौतम्या सह ततः प्रत्यागतौ भ्रातरौ शार्ङ्गरवशारद्वतौ सम्मुखरणे पराजितौ सैनिकाविव स्वकरतलात् रज्जोः प्रभ्रंशात् कूपे पतन्तं घटं पुनराप्तुमक्षमाविव वज्राघातेन अवरुद्धवाचाविव...।[38]

विरोधाभासस्य सुन्दरमुदाहरणमेकम् – पक्षिणस्ते प्रकृत्या निष्पक्षाः। पक्षहीना अपि मनुष्याः प्रायशः पक्षपातमाचरन्ति...।[39]

उपन्यासस्य पात्राणाम् अन्तर्ध्वनिः वसन्ततिलकासु ध्वनितः सन् उपन्यासे आद्यन्तं सांगीतिकं सौन्दर्यं सृजति। प्रसादगुणोपेतानि लघ्वाकाराणि अल्पसमासयुक्तानि पद्यानि पठनानन्तरमेव हृदयङ्गमानि भवन्ति।

संस्कृतसाहित्ये अकथितस्य कथनमिदं साहित्यस्य एका अभिनवा रीतिर्वर्तते यत्र पात्राणां मनोविश्लेषणेन तेषां हृदयगतभावाः साक्षात्क्रियन्ते। वाच्यार्थविमुखात्मा सहृदयहृदयः प्रो. मिश्रः पात्राणामेतेषां कथितैरतुष्टः सन् तेषां हृदि निगूढं व्यङ्ग्यम् अन्विष्टवान् शब्दाकारमानीतवान् च। संस्कृतभारतीतः प्रकाशितोऽयं ग्रन्थः सहृदयपाठकानां मध्ये लोकप्रियतां गतः सन् हिन्दीभाषायां 'शेष कथन' इति नाम्ना अनूदितश्चापि राष्ट्रीयपुस्तकन्यास (NBT) दिल्लीतः प्रकाशितो वर्तते। 'अकथितं किञ्चित्' नाम इदं गद्यकाव्यम् अभिज्ञानशाकुन्तलस्य रसास्वादनाय अभिनवानि द्वाराणि समुद्घाटयतीति नात्र विप्रतिपत्तिः काचिदिति शम्।

*

## सन्दर्भाः

1. अकथितं किञ्चित्, पृ.145
2. अभिनवभारती, भाग–2, पृ.339

3. ऋग्वेदः 10.71.02
4. तत्रैव 10.71.04
5. अकथितं किञ्चित्, पृ.9
6. तत्रैव, पृ.21
7. तत्रैव, पृ.21
8. तत्रैव, पृ.25
9. तत्रैव, पृ.26
10. तत्रैव, पृ.29
11. तत्रैव, पृ.32
12. तत्रैव, पृ.45
13. नैषधीयचरितम्, 1.137
14. अकथितं किञ्चित्, पृ.46
15. तत्रैव, पृ.55
16. तत्रैव, पृ.56
17. उर्वशी, पृ.47
18. अकथितं किञ्चित्, पृ.63
19. तत्रैव, पृ.65
20. महाभारतम् – स्वर्गारोहणपर्व – 5.62
21. श्रीमद्भगवद्गीता 2.62
22. अकथितं किञ्चित्, पृ.73
23. तत्रैव, पृ.74
24. तत्रैव, पृ.80
25 तत्रैव, पृ.91
26. तत्रैव, पृ.98
27. तत्रैव, पृ.104
28. तत्रैव, पृ.113
29. अभिज्ञानशाकुन्तलम् 1.10
30. अकथितं किञ्चित्, पृ.115
31. उत्तरमेघदूतम्, श्लोकः 41
32. अकथितं किञ्चित्, पृ.124
33. तत्रैव, पृ.126
34. परिक्रमा, पृ.15
35. अकथितं किञ्चित्, पृ.134
36. तत्रैव, पृ.142
37. तत्रैव, पृ.71
38. तत्रैव, पृ.48
39. तत्रैव, पृ. 76

*

## किञ्चिद् रामायणीयम्

*** नक्तं लङ्कां प्रविशन् हनुमान् कान्ताः ददर्श –**

**ताः कान्ताः –**

(i) समालभन्त्यः, (ii) अपराः पुनः स्वपन्त्यः

(iii) सुरूपवक्त्राः, (iv) हसन्त्यः,

(v) क्रुद्धाः पराः विनिःश्वसन्त्यः।

**वरार्हाः स्त्रियः –**

(i) सुविशुद्धभावाः (ii) महानुभावाः

(iii) प्रियेषु पानेषु य सक्तभावाः

(iv) सुप्रभावाः ताराः इव

(v) ज्वलन्त्यः

(vi) त्रपया उपगूढाः

(vii) निशीथकाले रमणोपगूढाः

(viii) विहङ्गोपगूढाः विहङ्गाः इव प्रमदोपगूढाः

**अन्याः स्त्रियः –**

(i) हर्म्यतलोपविष्टाः

(ii) प्रियाङ्के सुसुखोपविष्टाः

(iii) भर्तुः पराः धर्मपराः निविष्टाः मदनोपविष्टाः

काश्चित् अप्रावृताः काञ्चनराजिवर्णाः,

काश्चित् परार्ध्यास्तपनीयवर्णाः,

काश्चित् शशलक्ष्मवर्णाः कान्तप्रहीणाः रुचिराङ्गवर्णाः

रामाः मनोभिरामान् प्रियान् प्राप्य –

सुप्रीतियुक्ताः, सुमनोभिरामाः, गृहेषु हृष्टाः,परमाभिरामाः।

**आधारः - रामायणम्, सुन्दरकाण्डम्, 5 सर्गः**

# आधुनिकसंस्कृतकाव्यशास्त्रे काव्यकारणम्

**डा. संजयकुमारचौबे**

भगवत्या भारत्याः कृपाप्रसादप्राप्तेऽस्मिन् भारते वर्षे आप्राचीनकालाद् नैकविधविषयेषु नानाविधचिन्तनसरणिः प्रचलन्ती विद्यते। कस्मिंश्चिदपि क्षेत्रे निश्चयेनायं वक्तुं शक्यते यदेषः अन्तिमः सिद्धान्तः नाग्रे किमप्येतद्विषये चिन्तयितुं शक्यत इति। नवनवोन्मेषशालिनी प्रज्ञा कविभ्यश्चिन्तकेभ्यो नवीनां पद्धतिं नूतनविचारांश्च जनयितुं समर्था जायते। तत्प्रभावात् काव्यशास्त्रेऽप्येतद् नवचिन्तनं प्रवर्तते। पूर्वं भरतभामहप्रभृतय आचार्याः स्वप्रज्ञाबलेन काव्यरहस्यमुद्घाटयितुं काव्यशास्त्रग्रन्थान् व्यरचयन्। भरतादारभ्य सप्तदशशताब्द्याः पण्डितराजजगन्नाथं यावदेषा समृद्धा रचनापद्धतिः प्राचलत्। तदनन्तरं मध्ये किञ्चित् क्षुण्णेव भूत्वा पुनः जागृतिमवाप्य अग्रे प्रवर्धते। सामान्यतः आधुनिकसंस्कृतसाहित्यस्यारम्भः 1784 ख्रिष्टाब्दतः स्वीक्रियते।[1] तदेव काव्यशास्त्रस्यापि भवितुमर्हति। कालप्रभावात् संस्कृतकाव्यलेखने युगबोधानुरूपं नवविकासः नवादर्शश्च सञ्जाताः। तदनुरूपमेव काव्यलक्षणग्रन्थनिर्माणमप्यभूत्। संस्कृतसाहित्यविकासदृष्ट्या विशेषतः काव्यशास्त्रविकास-दृष्ट्या विंशशताब्द्या आरभ्य अद्यावधिं यावत् कालखण्डः महत्त्वपूर्णो विद्यते। अतोऽयमेव कालोऽत्र शोधलेखाय स्वीकृतः। विंशशताब्द्यामेकविंशशताब्द्यां च बहवः काव्यशास्त्रग्रन्थाः दृष्टिपथमवतरन्ति यत्र काव्यगततत्त्वानां गभीरविवेचनं विद्यते। आधुनिककाव्यशास्त्रिषु कौत्स-अप्पलसोमेश्वर-छज्जूरामशास्त्री-रेवाप्रसादद्विवेदी-ब्रह्मानन्दशर्मा-शिवजी उपाध्याय-रमाशङ्कर तिवारी-शङ्करदेव अवतरे-अमरनाथपाण्डेय-रामप्रताप वेदालङ्कार-राधावल्लभ त्रिपाठी-अभिराज राजेन्द्र मिश्र-रहसबिहारी द्विवेदी-हर्षदेव माधव प्रभृतयः प्रमुखा वर्तन्ते। एते आचार्याः स्वकाव्यशास्त्रे काव्यनिर्माणस्य किं कारणं मन्वते इति विचारयितुं शोधपत्रमिदं प्रस्तूयते। पूर्वाचार्या यथा काव्यहेतुप्रयोजनभेदादिविषये सूक्ष्मदृष्टिं निक्षिपन्ति तथैवाधुनिकाः कव्यशास्त्रिणोऽपि। काव्यहेतुविषये विविधमतं दृश्यते। केचन काव्यशास्त्रिणः प्रतिभां काव्यकारणत्वेन मन्यन्ते। केचन शक्तिव्युत्पत्त्यभ्यासानां त्रयाणामपि समुदितरूपम्। केचन च प्रधानतया प्रतिभया सह सहायकत्वेन व्युत्पत्त्यभ्यासौ काव्यकारणत्वेनाङ्गीकुर्वन्ति। आधुनिककाव्यशास्त्रिष्वन्यतमः आचार्यः कौत्स अप्पल सोमेश्वर शर्मा साहित्यविमर्शे

प्रतिभामेव प्राधान्येन काव्यकारणं मन्यते– **काव्योत्पत्तौ प्रतिभैव प्रधानं कारणम्।**[2] तद्विचारे प्रतिभाया विद्यमाने व्युत्पत्त्यभ्यासौ यदि भवेतां तदा सुवर्णे गन्धवत् स्यात्। प्रतिभाव्युत्पत्त्यभ्यासानां समुदितकाव्यकारणता नोचितास्ति यतोहि तथा सति सत्यामपि प्रतिभायां व्युत्पत्त्यभ्यासयोरभावे कविकर्म न संभवति परं नैतत् सर्वदा दृश्यते। सोमेश्वरनये प्रतिभा कवित्वबीजरूपसंस्कारविशेषोऽस्ति यो हि जन्मान्तरसुकृतेन प्राप्यतेऽथवा देवतामहापुरुषप्रसादादिभिर्जायते।[3] अत्र मते पण्डितराजजगन्नाथः सादरं स्मर्यते येन प्रतिभायाः हेतुः **क्वचिद्देवतामहापुरुषप्रसादादिजन्यमदृष्टमिति** प्रत्यपादि।[4] सहैव मम्मटोऽपि **शक्तिः कवित्वबीजरूपः संस्कारविशेषः**[5] इति शक्तिविवरणेन नयनपथमवतरति।

छज्जूरामशास्त्री नितरां प्रसिद्धे स्वकीये साहित्यबिन्दुरिति काव्यशास्त्रीये ग्रन्थे शक्तिः व्युत्पत्तिः अभ्यासश्चेति त्रितयं समन्वितरूपेण काव्यकारणं मनुते। यथोक्तम्–

**तस्य काव्यस्य निर्माणे समुल्लासे प्रचारणे।**
**व्युत्पत्तिः शक्तिरभ्यासः त्रयं हेतुर्न हेतवः।।**[6]

काव्यकारणप्रतिपादने तस्य दृष्टिः मम्मटाभिमता दृश्यते। यथा मम्मटधिया शक्तिर्निपुणता[7] ... इत्यनेन शक्तिः व्युत्पत्तिः अभ्यासश्चेति त्रयोऽपि दण्डचक्रचीवरादिन्यायेन हेतुर्भवन्ति न तु तृणारणिमणिन्यायेन हेतवस्तथैव शास्त्रिमतेऽपि। एतस्याचार्यस्य नये केवला प्रतिभा काव्यस्य कारणं न भवितुमर्हति। अत एव स जगन्नाथमतं खण्डयन् ब्रूते–'**यत्तु तैलङ्गपुङ्गवो रसगङ्गाधरकारः काव्यघटनानुकूलशब्दार्थोपस्थितिरूपां कविगतां प्रतिभामेव केवलं काव्यस्य कारणमाह–तन्न। 'कविर्मनीषी परिभूः स्वयम्भूरिति श्रुतिप्रतिकूलत्वान्मम्मटादिसकलप्राचामर्वाचां च ग्रन्थैर्विरुद्ध-त्वाच्च।**'[8] तन्मते प्रतिभायाः काव्यकारणस्वीकारे '**कविर्मनीषी परिभूः स्वयम्भूरिति** श्रुतिप्रतिकूलत्वमुपयाति। अत्र श्रुतिप्रतिकूलत्वसन्दर्भे शास्त्रिवर्यस्य नवीना दृष्टिर्दृश्यते तद्व्याख्यादृष्ट्या श्रुत्यनुसारं काव्यकर्ता कविः स्वतः सिद्धशक्तिमान्, सर्वार्थज्ञानवान् मननशीलश्च भवति।[9] अतः केवलं प्रतिभया चैतन्न संघटते।

अधुनातनविश्रुताचार्येषु सनातनोपाह्वो रेवाप्रसादद्विवेदी नितरां समादरणीयो वर्तते। तच्चिन्तनं प्रतिपादनशैली च विलक्षणास्ति। तद्यशोभूतायां काव्यालङ्कारकारिकायां काव्यकारणं प्राप्यते। तत्र सनातनकविः प्रतिभां काव्योत्पत्तौ कारणं मन्यते। काव्यनिरूपणे स रम्योपमानमाश्रित्य ब्रवीति यत् प्रतिभा काव्ये कारणं विद्यते मेघमालायां यथा विद्युतः उद्योतनं भवति तथैव प्रज्ञायामर्थप्रतिभासनं जायते। यथोक्तम्–

**कारणं प्रतिभा काव्ये सा चार्थप्रतिभासनम्।**
**प्रज्ञाकादम्बनीगर्भे विद्युदुद्द्योतसोदरम्।।**[10]

अत्र प्रतिभा बुद्धिगतो गुणविशेषोऽस्ति यो ह्यर्थस्य प्रतिभासनं कुरुते।[11] एषा द्विविधा– स्वयम्भूः सहेतुश्च।[12] आचार्यद्विवेदिनये प्रतिभाया उत्पत्तौ केवलः सत्त्वोद्रेकः कारणं भवति। तन्मते अदृष्टव्युत्पत्त्यभ्यासादिप्रतिभोत्पत्तौ करणं न तु कारणमिति।[13] **'उपादानं निमित्तं च काव्याय प्रतिभैव सा।'**[14] इति रीत्या एतस्याः प्रतिभायाः काव्यं प्रति कारणत्वं निमित्तोपादानोभयत्वमिति द्विवेदिमतम्।

ब्रह्मानन्दशर्मा काव्यसत्यालोकस्य पञ्चमोद्योते शक्तिः श्रमश्चेति द्वयमपि समन्वितभावेन काव्यकारणं मनुते। अत्र मते प्राधान्येन काव्यकारणं शक्तिरेवास्ति परं श्रमस्याप्युपयोगितावश्यमेव विद्यते। तद्यथा –

**शक्तिः श्रमश्च काव्यस्य कारणमिति मे मतिः।**
**शक्तिरत्र प्रधाना स्यात् श्रमस्याप्युपयोगिता।।**[15]

एतदाचार्यमते निपुणताभ्यासौ न दृष्टिपथमायातः। यद्यपि श्रमे एतयोरन्तर्भावं कर्तुं युज्यते परञ्च श्रमक्षेत्रस्य किमपि नियतं फलकं नास्ति।

शिवजी उपाध्यायः साहित्यसन्दर्भे काव्यस्वरूपविमर्शावसरे वदति यत् कविः स्वीयप्रज्ञया नवनवोन्मेषशालिन्या प्रतिभया लोकोत्तरमनुत्तमं च काव्यं विरचयति। एतेन तन्मते प्रतिभा काव्ये हेतुभूता जायते। यथोक्तम् –

**स्वयम्भूकविरेकोऽसौ परिभूय मनीषया।**
**काव्यमातनुते किञ्चित् लोकोत्तरमनुत्तमम्।।**[16]

प्रकृतपद्यस्य '**कविर्मनीषी परिभूः स्वयम्भू**रित्यौपनिषदिकमन्त्राधारितं सुन्दरं व्याख्यानं प्रस्तुवन् असौ भणति– '**स्वयम्भवनशीलः प्रातिभप्रकाशप्रशस्तात्मप्रभावभास्वरो मनसः हीशिता मनीषी भूतवर्तमानभविष्यद्द्रष्टा स्वीयप्रज्ञया नवनवोन्मेष-शालिन्या प्रतिभया परितः समन्ताद् भूत्वा परिव्याप्य लोकोत्तरवर्णनानै-पुण्येनासौ जगद्विश्रुत एकोऽद्वितीयसंख्यावान् कविः क्रान्तदर्शी सर्वदृक् किमपि लोकोत्तरं चमत्कारजनकमनुत्तममुत्तमोत्तमञ्च काव्यं स्वकर्तृताविशिष्टं कर्मातनुते प्रसारयतीति।'**[17]

श्रुतिवाक्यव्याख्याधारितं मतमिदं नवचिन्तनस्य फलं प्रतिभाति। यद्यपि काव्यकारणप्रसङ्गे पूर्वं छज्जूरामवर्योऽपि श्रुतिमिमामादाय स्वमतं प्रकटितवान्।

आचार्य रमाशङ्कर तिवारीवर्यः शक्तिरूपां प्रतिभां कविकर्मणो हेतुत्वेनाम्नाति। तन्मते प्रतिभैव काव्यकारणम्। निर्माणकर्मकुशलया प्रज्ञारूपप्रतिभया समस्तः काव्यलोकः प्रकाश्यते। व्युत्पत्तिः अभ्यासश्च एतौ द्वावपि प्रतिभाया उपकारकौ वर्तेते न तु साक्षाद् हेतुभूतौ। यथोक्तम्–

**प्रतिभा जननी कविकर्मणश्च। कथ्यते सैव शक्तिः काव्यसुविज्ञैः।।**

**निर्मितिनिपुणा प्रज्ञा हि प्रतिभा। प्रकाशयति काव्यलोकं समग्रम्।।**

**ननु व्युत्पत्तिः ह्यभ्यासो न हेतुः। प्रतिभाया उपकारकौ काव्यरचने।**[18]

अत्र पूर्वाचार्यस्य वाग्भटस्य काव्यकारणहेतुतैव प्रकारान्तरेण प्रतिपादितास्ति। वाग्भटः साक्षादत्र स्मरणीयः। तद्यथा–

**प्रतिभैव च कवीनां काव्यकरणकारणम्। व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकौ न तु काव्यहेतू।**[19]

अभिनवकाव्यशास्त्रे शङ्करदेव अवतरेः काञ्चित् पृथक् सरणिमनुसृत्य शक्तिनिपुणताभ्यासानामविभाज्ययोगाज्जायमानां प्रतिभां काव्यहेतुत्वेनोपन्यस्यति। प्रतिभेयं जडचेतनादिषु प्रवेशं प्राप्य तथैव विचरति यथा अनासक्तो विधाता प्रकृत्यन्तः प्रविश्य विचरति–

**काव्ये त्रित्वान्वयी हेतुः प्रतिभानामकः कवेः।**
**प्रकृत्यन्तः प्रवेशार्होऽप्यसक्तस्येव वेधसः।।**[20]

काव्यसिद्धान्तकारिकायाः प्रणेता आचार्योऽमरनाथपाण्डेयः शक्तिनिपुणतयोः द्वयोः सद्भावं काव्ये हेतुभूतं मन्यते। स काव्यनिर्माणे न केवलां शक्तिं नापि निपुणतामङ्गीकरोति। यथोक्तम्–

**न केवला शक्तिरुदेति सिद्ध्यै**
**न नैपुणी कारणतामुपैति।**
**द्वयोः परां प्रीतिमलौकिकस्य**
**काव्यस्य हेतुं प्रतिपादयामः।।**[21]

चमत्कारविचारचर्चायां रामप्रतापवेदालङ्कारः शक्तिः निपुणता अभ्यासश्चेति विशिष्टकाव्यहेतून् आचष्टे। तद्धिया एतैरेव कवयः चमत्कारसुवासितं काव्यं रचयन्ति।

**शक्तिनिपुणताभ्यासैर्विशिष्टैः काव्यहेतुभिः।**
**कविना तन्यते काव्यं चमत्कारसुवासितम्।।**[22]

अत्र त्रयाणां समुदितरूपेण न प्रत्युत शक्त्यादीनां विशिष्टरूपेण काव्यकारणता स्वीकृता वर्तते। वेदालङ्कारमहोदयः आनन्दवर्धनेन प्रभावितः सन् व्युत्पत्त्यभासयोर्महत्त्वमुररी-कुर्वन्नपि विशिष्य प्रतिभामेव शिखरीभूतां मन्यते। तन्मते शक्तिजाच्चमत्कारात्सर्वो-ऽप्यर्थोऽवभासते। शक्तिव्युत्पत्त्यभ्यासे काव्यत्वं न जायते। एवमेव व्युत्पत्त्यभ्यासौ व्यर्थतां यातः यदि चमत्कारकारिणी प्रतिभा नास्ति। प्रतिभैव कवीनाममूल्यमाभरणं विद्यते। तेन युक्तो महाकविस्तदयुक्तोऽकविश्च जायते–

**प्रज्ञा सा प्रतिभा प्रोक्ता नवोन्मेषशालिनी।**
**या स्फुरणात्मिकी भूत्वा व्यनक्ति तां चामत्कृतिम्॥**
**न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभा गुणः।**
**तदभावे च न भूयात्काव्यनिर्माणसम्भवः॥**
**शक्तिजाच्च चमत्कारात् सर्वोऽप्यर्थः प्रवर्तते।**
**एतत्सम्पर्कमासाद्य काव्यं काव्यमुदीर्यते॥**
**शक्तिव्युत्पत्त्यभावे यच्छब्दानां विनियोजनम्।**
**प्रक्लिष्टार्थकमेतन्न काव्यं सूरिभिरुच्यते॥**
**अव्युत्पत्तिभवो दोषः शक्त्यैवाव्रियते कवेः।**
**किन्त्वशक्तिकृतो दोषः शीघ्रमेव प्रतीयते॥**
**व्युत्पत्त्यभ्यासवैयर्थ्यं को लाभः शब्दलीलया।**
**काव्ये यदि मनाङ् नास्ति प्रतिभा सा चमत्करी॥**
**कविशक्त्याः समुद्भूतं कौतुकगन्धसमन्वितम्।**
**चमत्कारसमाकीर्णं काव्यं कस्मै न रोचते॥**
**सूक्तिर्गीतञ्च वाद्यं च लीलाश्च कान्तकान्तयोः।**
**काव्यास्वादकरं सर्वं प्रातिभी प्रस्तुतिर्यदि॥**
**चमत्कारमयीं वाचं तदन्वितञ्च रूपकम्।**
**श्रुत्वा दृष्ट्वा न हृष्यन्ति काष्ठकुड्यनिभा जनाः॥**
**प्रतिभैव कवीनां साऽनर्घमाभरणं मतम्।**
**तदयुक्तोऽकविः प्रोक्तस्तद्युक्तश्च महाकविः॥**[24]

अभिराजराजेन्द्रमिश्रः प्राचीनाचार्याणां हेतुत्रयं हेतुषट्कञ्च प्रस्तूय शक्तिरूपां प्रज्ञामेव

कवित्वस्य बीजं प्रतिपादयति। तद्विचारे कवित्वबीजमावश्यकं विद्यते। यथा मृत्तिकाजलवायूनां विद्यमानेऽपि यदि भूमिभागे बीजं नास्ति चेदङ्कुरो न प्ररोहति तथैव शास्त्रपाण्डित्ये लब्धेऽपि प्रज्ञाया अभावे कवित्वबीजं न प्ररोहति। स आत्मकविताजनने भगवतीं शारदां हेतुभूतां निगदति–

**प्रज्ञा बीजं कवित्वस्य शक्तिरूपा चिरन्तिनी।**
**जन्मजन्मान्तरोपात्तसंस्कारप्रसवाऽऽमला।।**
**मृत्तिकाजलवायूनां सद्भावेऽपि यथाङ्कुरः।**
**बीजेऽसति धरागर्भे नैव जातु प्ररोहति।।**
**तथैवाचरितेऽभ्यासे भूयोभूयोऽप्यनारतम्।**
**लब्धेऽपि शास्त्रपाण्डित्ये शतशाखेऽतिविस्तृते।।**
**प्रज्ञां विना कवित्वस्य बीजं नैव प्ररोहति।**
**सत्यमेतद्दृषद्रेखाकल्पमुह्यं मनीषिभिः।।**

**नाहं करोमि कवितामिह शारदैव साऽऽत्मानमञ्जयति मत्कवनच्छलेन।**
**गन्धं तनोति जलजं न निजप्रभावाद् विस्फूर्जितं सकलमेव तदर्कलक्ष्म्याः।।**[25]

राधावल्लभ त्रिपाठी अभिनवकाव्यालङ्कारसूत्रस्य प्रथमाधिकरणे काव्यकारणं निरूपयन् सूत्रं ब्रूते– **जागरिता प्रतिभा तस्य कारणम्।**[26] अर्थात् काव्यरचने जागरिता प्रतिभा कारणं भवति। राधावल्लभदृष्ट्या प्रतिभा द्विविधा– संस्काररूपा जागरिता च। तत्र जागरिता प्रतिभैव काव्यकारणम्। जागरिता अर्थात् स्पन्दशीला प्रतिभा। वृत्तिदृष्ट्या जागरणं नाम– **काव्यघटनानुकूलशब्दार्थोपस्थितिर्जागरणम्।**[27] अस्य जागरणस्य हेतवः सन्ति– गुरूपदेशः, लोकशास्त्राद्यवेक्षणम्, काव्याभ्यासः, काव्यगोष्ठ्यः, सहृदयानां सङ्गतिः, प्रसङ्गविशेषो घटनाविशेषो वा।[28] राधावल्लभमते क्वचित् कवित्वशक्तिरूपा सा प्रतिभा काव्यरचनानुकूलशब्दार्थादीनां ज्ञानमभ्यासं च स्वत एव स्वीकरोति। क्वचिच्च प्रथमतया प्रतिभया काव्यस्य बीजाङ्कुरणं भवति व्युपत्त्या तस्य पूर्तिः, अभ्यासेन तस्य परिष्कारश्च जायते।[29] एच्. वि. नागराजराव महाशयः तन्मतमालोचयन् वदति यत् 'शक्तिर्निपुणता....' इति मम्मटमतमपि अत्र जागरितेत्यस्य विवरणे सम्यक् समग्राहि। प्रतिभा जन्मान्तरसंस्कारसिद्धा वा प्रयत्नसम्पाद्या वेति विचारयितुं शक्यते।

आचार्य रहसबिहारीद्विवेदी नव्यकाव्यतत्त्वमीमांसायां काव्योपयोगाय शब्दार्थयोः प्रतिभया युक्तामुपस्थितिम्, लोकशात्राणां नैपुण्यं, विधाज्ञानं च काव्यकारणं ब्रवीति–

**काव्योपयोगिशब्दार्थोपस्थितिः प्रतिभामयी।**
**नैपुण्यं लोकशात्राणां विधाज्ञानं च कारणम्।।**[31]

वागीश्वरीकण्ठसूत्रे हर्षदेव माधवः क्वचिद् राधावल्लभेन प्रभावितः काव्य-कारणसूत्रमुल्लिखति– **स्पन्दशीला प्रतिभा तस्य कारणम्।**[32] अर्थात् स्पन्दशीला प्रतिभा काव्ये कारणं भवतीति।

इत्थमत्र काव्यकारणे आधुनिकाचार्या यथाचिन्तनं स्वविचारान् प्रकटयन्ति। अत्र केचन केवलां प्रतिभां कव्योत्पत्तौ कारणं मन्वते। केचन मुख्यरूपेण प्रतिभां सहायकत्वेन व्युत्पत्त्यभ्यासौ काव्यहेतुं प्रतिपादयन्ति। केचित् शक्तिः व्युत्पत्तिः अभ्यासश्चेति त्रितयं सहभावात् काव्यकारणं प्रस्तुवन्ति। केचिच्च समुदितरूपेण शक्तिश्रमौ काव्यकारणमामनन्ति। केचित् शक्त्यादीन् त्रीनपि विशिष्टकाव्यहेतून् मन्यन्ते। केचित् समुदितरूपेण शक्तिश्रमौ काव्यकारणमामनन्ति। केचित् सहभावात् शक्तिनिपुणते काव्यहेतुमङ्गीकुर्वन्ति। केचिच्च प्रतिभापुरस्कृतां काव्यरचनानुकूलशब्दार्थोपस्थितिं, निपुणतां विधाज्ञानं च काव्यकारणं प्रवदन्ति। परं प्रायो बहवः प्रतिभामेव (शक्तिम्) काव्यकारणं प्रतिपादयन्ति। अत्र विचारे क्वचित् प्रतिभा प्रज्ञा च भिन्नैव प्रतिभाति यथा सनातनकविमते प्रज्ञायामर्थप्रतिभासरूपा प्रतिभा दृश्यते। क्वचिन्मते प्रज्ञैव प्रतिभा सैव शक्तिरिति यथा रमाशङ्करव्याख्यानेन प्रस्फुटीभवति। क्वचिन्मते शक्तिव्युत्पत्त्यभ्यासैरुत्पद्यते प्रतिभा, सा च काव्यकारणम् यथा शङ्करदेवदृष्टौ।

अभिराजराजेन्द्रमिश्रधिया तु शक्तिरूपा चिरन्तिनी प्रज्ञा काव्यनिर्माणे विलसति। एवमेव राधावल्लभहर्षदेवमाधवविचारेऽपि प्रतिभा काव्यकारणीभूता।

सूक्ष्मदृष्ट्यात्र विवेचनेनेत्थं वक्तुं शक्यते यदनेकेषां काव्यशास्त्रिणां मते प्रतिभा काव्यनिर्माणमूला विद्यते परं बहुभिः काव्यशास्त्रिभिः प्रत्यक्षतया प्रतिभाया अङ्गीकारेऽपि तद्व्याख्यानपरिशीलने निपुणताभ्यासादयः प्रायो दृष्टिपथमवतरन्त्येव। काव्यसाधने पूर्वाचार्येभ्यस्तुलनायां परमार्थतः बहुभेदं न प्रतिभाति किञ्च प्रतिपादनप्रतिभावश्यमेव नूत्ना जायत इत्यलम्।

*

## सन्दर्भाः

1. पुनर्जागरणकाल (1784-1884), स्थापना काल (1985-1946), समृद्धिकाल (1947 से आज तक) नान्दीवाक्, संस्कृत काव्यशास्त्र की अर्वाचीन परम्परा
2. साहित्यविमर्शः पृ.36
3. 'अतः काव्योत्पत्तौ प्रतिभैव प्रधानं कारणम्। सत्यां तस्यां यदि व्युत्पत्त्यभ्यासौ स्तस्तर्हि हेम्नः परं प्रमोद इत्यवश्यमभ्युपेयम्। समुदितहेतुवादिनां मते तु प्रतिभायास्सत्त्वेऽपि व्युत्पत्त्यभ्यासयोरभावे काव्यस्यानुपपत्तिरेवापद्येत, सामग्र्या असम्पूर्णत्वात्। न हि तथाविधोऽनुभवः। अतो युक्त्यनुभवानुरोधात्प्रतिभाया एव काव्यकारणत्वमङ्गीकार्यम्। स च जन्मान्तरसुकृतागतो देवतामहापुरुषप्रसादादिजन्यो वा कवित्वबीजरूप संस्कारविशेषः।' साहित्यविमर्शः, द्वितीय परिच्छेदः, पृ. 36
4. रसगङ्गाधरः पृ.9
5. काव्यप्रकाशः, पृ.16
6. साहित्यबिन्दुः 1.8
7. काव्यप्रकाशः, प्रथम उल्लासः, कारिका–3
8. साहित्यबिन्दुः, पृ.12–13
9. स्वयम्भूः-स्वतः सिद्धशक्तिमान्, परिभूः-सर्वार्थज्ञानवान्, मनीषी-मननशीलः, कविः-काव्यकर्ता भवतीति श्रुत्यर्थः। साहित्यबिन्दुः पृ.12–13
10. काव्यालङ्कारकारिका, 2
11. अर्थप्रतिभासयिता बुद्धिगतो गुणविशेषः प्रतिभा। तत्रैव–पृ. 1
12. स्वयम्भूश्च सहेतुश्चेत्यसौ लोके द्विधा स्थिता।
    आदिमाऽऽदिकवौ दृष्टा द्वितीयान्यत्र दृश्यते।। काव्यालङ्कारकारिका–5
13. द्वितीया या भवन्त्यत्र कारणानि बहून्यपि।
    कारणं तु भवत्यत्र सत्त्वोद्रेको हि केवलः।। काव्यालङ्कारकारिका–6
14. काव्यालङ्कारकारिका–19
15. काव्यसत्यालोकः 5.68
16. साहित्यसन्दर्भः पृ.26, कारिका 11
17. साहित्यसन्दर्भः पृ.26
18. काव्यतत्त्वविवेकः – 1.4,7,9
19. वाग्भटालङ्कारः पृ.2
20. अभिनवकाव्यशास्त्रम् 2.53
21. काव्यसिद्धान्तकारिका, 14
22. चमत्कारविचारचर्चा, कारिका 11

23. अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य झटित्येवावभासते।।
न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभा गुणः। ध्वन्यालोकः 3.6 वृत्तिभागः
24. चमत्कारविचारचर्चा-प्रथमविचारः कारिका– 12-21
25. अभिराजयशोभूषणम्, प्रथमोन्मेषः।
26. अभिनवकाव्यालङ्कारसूत्रम्, 1.3.1
27. तत्रैव, पृ.18
28. तत्रैव, पृ.18
29. तत्रैव, पृ.18
30. विचारलहरी, पृ.4
31. उद्धृतम्, आधुनिकसंस्कृतकाव्यशास्त्रसमीक्षणम्, पृ. 41
32. वागीश्वरीकण्ठसूत्रम्, 1.12

*

## किञ्चिद् रामायणीयम्

*** हनुमता लङ्कायां कृतं चन्द्रदर्शनम्** –

**चन्द्रस्य क्रियाः –**

(i) लोकस्य पापानि विनाशयन् शीतांशुः

(ii) महोदधिं समेधयन् ,,

(iii) सर्वाणि भूतानि विराजयन् ,,

**अम्बरस्थः चन्द्रः कीदृशः –**

* यथा राजतपञ्जरस्थः हंसः

* यथा मन्दरकन्दरस्थः सिंहः

* यथा गर्वितकुञ्जरस्थः वीरः

* तीक्ष्णशृङ्गः ककुद्मान् इव

* ऊर्ध्वशृङ्गः श्वेतः महाचलः इव

**भगवान् शशाङ्कः चन्द्रः रराज –**

विनष्टशीताम्बुतुषारपङ्कः,

महाग्रहग्राहविनष्टपङ्कः,

प्रकाशलक्ष्म्याश्रयनिर्मलाङ्कः।

* यथा शिलातलं प्राप्य मृगेन्द्रः

* यथा महारणं प्राप्य गजेन्द्रः

* यथा राज्यं समासाद्य नरेन्द्रः

**भगवान् प्रदोषः –**

प्रकाशचन्द्रोदयनष्टदोषः,

प्रवृद्धरक्षः, पिशिताशदोषः,

रामाभिरामेरितचित्तदोषः, स्वर्गप्रकाशः

**आधारः - रामायणम्, सुन्दरकाण्डम्, 5 सर्गः**

# गीतायां राजविद्यायाः व्यवस्थापनविद्यातत्त्वस्यानुशीलनम्

**जयन्त मण्डलः**

**मुख्यशब्दाः –** गीतायां राजधर्मः, गीतायां राजविद्या, राज्यशासनपद्धतिः, सुशासकस्य लक्षणम्, व्यवस्थापनविद्यासम्बन्धी विचारः।

धर्मः खलु जीवनव्यापि तत्त्वम्। अतः स्वाभाविकतया अस्मिन् जीवनव्यापिनि तत्त्वे राजधर्मस्यापि अन्तर्भावः दृश्यते। धर्मस्य कारणेनैव राजा प्रतिष्ठां लभते। कोऽपि धर्मात् न गरीयान्। धर्मः शासनस्य साहाय्येन बलहीनम् अपि बलवता सार्धं संघर्षे विजयं प्रापयति। शतपथब्राह्मणे उक्तमस्ति यद्– 'धर्मः शासकस्यापि शासकः अस्ति'। राज्ञा प्रजानां सुखे स्वस्य सुखं तथा तेषां कल्याणे स्वस्य कल्याणमनुष्ठेयम्। स्वस्यैव यत् केवलं रुचये भवति तन्न हितकरम्, अपि तु यत् प्रजाभ्यः रुचिकरं तदेव परमार्थेन हितकरम् इति राजा अवश्यमेव चिन्तयेत्।

**राजधर्मः**

शास्त्रेषु नृपतीनां कृते पञ्चविधानि कर्तव्यानि निर्दिष्टानि सन्ति –

**दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोषस्य च संप्रवृद्धिः।**
**अपक्षपातोऽर्थिषु राष्ट्ररक्षा पञ्चैव यज्ञाः कथिता नृपाणाम्॥**

(अत्रिसंहिता)

राज्ञः धर्मः राजधर्मः सर्वधर्मप्रधानः सर्वो धर्मो राजधर्मप्रधानः (महा. शा. 63.27)। राज्ञः प्रमुखं कर्तव्यं सर्वप्राणिनां रक्षणं पालनं च। स्थान–काल–पात्रभेदात् राजा सृष्टिरक्षार्थं विविधं रूपं धरति। यथार्थराजधर्मपालकस्य राज्ञः राज्ये प्रजाः सुखेन वसन्ति। यथा पुत्रः पितृगृहे निर्भयं विचरति तथा यस्य राज्ये प्रजाः निर्भयं निवसन्ति स एव राजसु श्रेष्ठः। अत उच्यते -

**पुत्र इव पितृगृहे विषये यस्य मानवाः।**
**निर्भया विचरिष्यन्ति स राजा राजसत्तमः॥**

**यथा पुत्रः पितृगृहे विषये यस्य मानवाः।**
**निर्भया विचरिष्यन्ति स राजा राजसत्तमः॥**

(महर्षिः वेदव्यासः)

महामतिः कौटिल्यः स्वकीये अर्थशास्त्रग्रन्थे राज्ञः कर्मविधानसूत्रं निर्दिशति -

**तस्मात् स्वधर्मभूतानां राजा न व्यभिचारयेत्।**
**स्वधर्मसन्दधानो हि, प्रेत्य चेह न नन्दति॥**
**प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।**
**नात्मप्रियं हितं प्रजानां तु प्रियं हितम्॥**[1]

महाभारतस्य शान्तिपर्वणि स्पष्टतया उल्लिखितमस्ति यत् प्रजाः धर्ममार्गे आनेतुं राजभिरपि धर्ममार्गः अनुसरणीयः। एतेन सर्वथा प्रजाकल्याणं भवेत्।

**राजा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते।**
**यद् यदाचरते राजा तत् प्रजानां स्म रोचते॥**[2]

**गीतायां राज्यशासनपद्धतिः**

परमात्मा श्रीकृष्णः स्वयमेव भगवान्। अखिलब्रह्माण्डस्य राजा भगवान् सृष्टिकार्यरक्षार्थं दुष्टानां विनाशार्थं पुनः पुनः धरायामवतीर्णो भवति।

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥**[3]

भगवता श्रीकृष्णेन राज्यशासनपद्धतेः वर्णनं कृतं श्रीगीतायाम्। गीतायां राज्यशासनस्य परम्परा वर्णिता वर्तते –

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥**
**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।**
**स कालेनेह महता योगो नष्टः परन्तप॥**

अहमिमम् अव्यययोगं विवस्वते प्रोक्तवान्। 'योगः कर्मसु कौशलम्'[4] भवति। क्षत्रियाणां कृते राज्यव्यवहारस्य पूर्णशासनपद्धतिः भवति योगशास्त्रम्। गीतोपदेशः राज्यशासनाय क्षत्रियाणां कृते प्रचलितः आसीत्। स च लुप्तः जातः–

**योगो नष्टः परन्तप।** (गी. 4.2)

एतद् गीताशास्त्रं क्षत्रियपरम्परायां सहस्रवर्षाणि यावत् स्थितम्। आध्यात्मिकज्ञानस्य आधारशिलायां स्थापिता राज्यशासनपद्धतिः विशिष्टरूपेण प्राचीने समाजे आदृता आसीत्। अस्याः पद्धतेः अनुकरणशीलेषु राजसु एकोऽपि अरण्यं गत्वा ध्यानधारणासु निमग्नः न अभवत्।

आश्रमचतुष्टयेषु गृहस्थाश्रमः प्रधानः। गृहस्थाश्रमादेव अन्याश्रमाणामाविर्भावः। स्वयं कृष्णार्जुनौ च गृहस्थौ आस्तामेव। अर्जुनः क्षत्रियकार्ये राजधर्मे वा संशयात्मा अभवत्। अर्जुनः स्वकर्तव्यं युद्धं विहाय भिक्षान्नेन जीवनं यापयितुम् ऐच्छत्, स्वकल्याणाय गृहस्थाश्रमस्य अपेक्षया संन्यासाश्रमं श्रेष्ठमिति अमन्यत। अतः भगवान् श्रीकृष्णः अर्जुनं कर्मयोगमुपदिशति।

**गीताया राजविद्या**

राजविद्याशब्दस्य अर्थः – राज्यशासनस्य कला। अद्य राजविद्याशब्दस्य अर्थः 'श्रेष्ठा विद्या' इति क्रियते। विद्यानां राजा राजविद्या। सा विद्या गुह्यतमा एव। अत्र पं. सातवळेकरमहोदयविरचितस्य 'गीतायां राजकीयतत्त्वम्' इत्यस्य उद्धरणं प्रमाणरूपेण उपस्थाप्यते –

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्॥**
**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि॥**[5]

महाराजानां राज्यशासनस्य विद्या वर्तते गीतायाम्। राज्यशासनम् अतिपवित्रम् उत्तमं वर्तते। विश्वरूपदर्शनानुसारं विश्वं भवति भगवतः स्वरूपम्। विश्वरूपे मनुष्याः प्राणिनः सर्वेऽपि भगवतः स्वरूपाणि। तेषां सेवया परम्परया भगवतः सेवा भवति। ये क्षत्रियाः राष्ट्रधर्मे श्रद्धां न धारयन्ति, भगवतः उपदेशस्य रहस्यं ते ज्ञातुं न समर्थाः।

'सर्वत्र ईश्वरः अस्ति' इति श्रद्धां ये न धारयन्ति, तेषां कृते राज्यशासनं सुकठिनं प्रतीयते। ये सर्वभूतेषु ईश्वरभावं स्थापयित्वा सर्वत्र ईश्वरस्य अनुभवं कुर्वन् सर्वैः सह अनन्यसम्बन्धं धारयन्ति, तेषां कृते गीतोक्तं राज्यशासनं सरलं भवति।

**सुशासकस्य लक्षणम्**

**निर्मानमोहा जितसङ्गदोषाः अध्यात्मनित्या विनिवृत्तकामाः।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्॥**[6]

आध्यात्मिके राज्यशासने परस्परं द्वन्द्वभावः नास्ति। अतः स्पर्धाः संघर्षाश्च न दृश्यन्ते। परस्परम् अनन्यभावेन समाजसेवां कर्तुं भावना भवति। अतः आध्यात्मिक-राज्यशासने अधिकव्ययस्य आवश्यकता न भवति। अर्थात् अस्मिन् शासने कोऽपि मानवः अन्यस्य लुण्ठनं न करोति। परोपकारभावनया अन्यस्य सेवां करोति। भगवता श्रीकृष्णेन प्रदत्तेन आध्यात्मिकेन उपदेशेन अर्जुनः युद्धाय तत्परः अभवत्। तत् खलु राजनीतिशास्त्रमेव भवेदिति न संशयः।

**व्यवस्थापनविद्यासम्बद्धतत्त्वानि**

गीतायां यथा राजविद्यातत्त्वं प्राप्यते तथैव राज्यपरिचालकस्य सुशासकस्य लक्षणमपि दीयते। आधुनिके समाजे विविधाः संस्थाः व्यवस्थापकं प्रबन्धकं वा नियोजयन्ति। एषः प्रबन्धकः व्यवस्थापकः वा त्रिभिस्स्तरैः कार्याणि साधयति। यथा –

* पारस्परिकसम्बन्धस्थापनम्।
* निर्णयः।
* मानवीयसम्बन्धस्थापनम्।
* परिस्थितेः निदानम्।
* इतिवृत्तज्ञानम्।

राज्यशासनाय एकं संविधानं भवति। तद्वत् संस्थाया अपि नियमाः सन्ति। प्रबन्धकाः नियमाननुसृत्य कार्येषु व्यापृताः वर्तन्ते। आधुनिकप्रबन्धकशास्त्रस्य एते नियमाः गीतायामपि प्राप्यन्ते। तत्रोच्यते -

**पञ्चैतानि महाबाहो कारणानि निबोध मे।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्॥** (गीता 14.13)

अद्य परिवर्तनस्य युगं प्रचलति। परिवर्तनेन सह परिस्थितिं विविच्य प्रबन्धकस्य सिद्धान्तग्रहणम् उचितं प्रतीयते। अस्याः समस्यायाः समधानार्थं अनेकं पुस्तकं वर्तते। बाहुल्यात् तेषां सिद्धान्तपालनमपि कठिनं प्रतिभाति। अतः अद्य प्रबन्धकाः कर्तव्याकर्तव्यं विस्मरन् अर्जुनः इव निराशां पोषयित्वा कर्मक्षेत्रतः पलायनं करणीयम् अथवा आत्महत्या करणीया इति चिन्तयन्ति। अर्जुनः गीतायां यथा उवाच –

**न चैतद् विद्मः कतरन्नो गरीयो**
**यद्वा जयेम यदि वा नो जयेयुः।**
**यानेव हत्वा न जिजीविषाम-**
**स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः॥**

अर्जुनस्य कथनम्– एतदपि नाहं जानामि यत् मम निमित्तं किं श्रेयस्करम्। यतः मया यत् कथितं तत् सर्वम् अज्ञाने लिप्तं जातमेव। अज्ञानरूपात् आसक्तिवशतः विद्वज्जनानां बुद्धीन्द्रियाणि लक्ष्यभ्रष्टाणि जायन्ते, अन्यजनानां तु का कथा ?

**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते।**
**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः॥**[7]
**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः॥**[8]

कापि संस्था यदा कर्मचारिनियोगं करोति तदा सा संस्था कर्मचारिणः सर्वोच्च-संरचनां प्रकाङ्क्षति। किन्तु प्रबन्धकः अपि मनुष्यः। तस्य अपि कार्यक्षेत्रे क्रोधः, चिन्ता, प्रसन्नता, लज्जा, घृणा कृतज्ञता च दृश्यते। तस्य विविधाः प्रक्षोभाः तस्य मुखमण्डले व्यवहारेषु च प्रभावं विस्तारयन्ति। तस्मात् प्रबन्धकः स्वाधीनतया कार्यं कर्तुं न समर्थः भवति। अतः ईदृशस्य जनस्य कृते मनोदौर्बल्यनिष्णाततायाः आवश्यकता अनुभूयते। भगवान् श्रीकृष्णसदृशः मनोदौर्बल्यनिष्णातः अस्मिन् जगति कः अस्ति?

यः न कदापि हृष्यति, न शोचति, यः शुभाशुभरहितः, शत्रुमित्रयोः समदर्शी शान्तान्तःकरणवृत्तिः, सदा तुष्टः, भक्तेः पराकाष्ठां सम्प्राप्य यः स्थिरबुद्धियुक्तः सः एव भगवतः अधिकः प्रियः वर्तते। एतादृशगुणान्विताः प्रबन्धकाः कस्याः अपि संस्थायाः प्रभूतोन्नतिं विधास्यन्तीति नास्ति सन्देहः।

अधुना अधिकारी तथ्यं विस्मृत्य स्वात्मानं 'अहमेव सर्वेश्वरः सर्वज्ञः सर्वाधिकारी' इति द्रष्टुं प्रचेष्टते। प्रबन्धकस्य व्यवहारेषु पवित्रताभावः अहिंसाभावश्च स्याताम्। अद्यतनीयाः प्रबन्धकाः नाम्ना एव शोभारूपाः सन्ति। उत्तमाचरणार्थं प्रबन्धकस्य वचनेषु विचारेषु च नियन्त्रणं स्थापनीयं भवति। अतः गीता कथयति – किमपि करणीयम् चेत् निष्ठापूर्वकं श्रद्धापूर्वकं निष्कामभावेन करणीयम्– **श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः** (गीता 17.17) इति। प्रबन्धकस्य कर्मचारिणं प्रति व्यवहारोऽयं 'कर्मकौशलम्' भवति।

कर्मणि कौशलस्थापनं भवति योगः– '**योगः कर्मसु कौशलम्।**'[9] कर्मचारिणां नियोगे सतर्कता अवलम्बनीया। कर्मचारिणां दक्षतां, ज्ञानं, स्वभावं सम्यग् ज्ञात्वा तदनुसारं तेषां नियोजनं प्रबन्धकस्य कार्यं भवति। स्वयं निष्कर्मा सन् केवलम् आदेशेन तु कर्मचारिणां मध्ये कर्मोद्यमता न जायते। प्रबन्धकेन स्वयं प्रदर्शनं करणीयम्। यतः कार्यक्षेत्रेषु प्रबन्धकस्य भूमिका अपरिसीमा। प्रबन्धको यदि कर्मपरायणः भवेत् तर्हि कर्मचारिणः अपि तमनुसरन्ति। श्रेष्ठजनाः यत् आचरन्ति अपरे जनाः अपि तदनुसारं कार्यं समाचरन्ति। प्रमाणरूपेण

सः यत् प्रस्तौति जगतः लोकः तस्य अनुसरणं करोति। उक्तं च भगवता–

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥**[10]

भगवता एवमपि उक्तमासीत् यत्– हे अर्जुन! मत्कृतं किमपि कार्यं त्रिषु लोकेषु न वर्तते, किमपि अवाप्तव्यं नास्ति, तथापि अहं यथार्थतया कर्म करोमि।

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥**[11]

किमर्थं भगवान् कर्मकरणाय प्रवृत्तो भवति? भगवान् यदि कर्मणि न प्रवर्तते तदा समाजः भगवतः अनुकरणं कृत्वा कर्मणः विरतः भविष्यति। भगवतः निष्कर्मतया सम्पूर्णो लोकः भ्रष्टतामालिङ्गिष्यति, लोकस्य पतनं भविष्यति।

संस्थायाः मुख्यप्रबन्धकं कर्मचारिणः अनुकुर्वन्ति। अतः संस्थायाः उन्नतिं विधातुं प्रबन्धकेन कार्यं करणीयम्। कार्यमेतत् तु अन्येषाम् अनुकरणार्थमपि संस्थानिमित्तं करणीयं भवति। असावधानतया कार्यकरणेन संस्थायाः विपुला क्षतिः साधिता भविष्यति। अतः प्रबन्धकस्य कृते ध्येयमन्त्ररूपाः उपर्युक्ताः श्लोकाः अध्ययनं कृत्वा अनुसरणीयाः।

**प्रबन्धकपदस्य योग्यता**

यस्य मोहमानौ नष्टौ जातौ, आसक्तिरूपः सङ्गदोषः येन जितः, आत्मध्याननिरतः, यस्य कामना निवृत्ता अभवत्, सुख–दुःखद्वन्द्वातीतः ज्ञानीजनः प्रबन्धकपदस्य अधिकारी भवति। अहङ्कारं, बलं, गर्वं, कामं, क्रोधं च परित्यज्य बाह्यवस्तूनामान्तरिकचिन्तनं कुर्वन्, ममतारहितः, शान्तान्तःकरणः पुरुषः एव ब्रह्मभूयाय कल्पते, एतादृशः जनः प्रबन्धकपदस्य योग्यो भवति।

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्॥**[12]
**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते॥**[13]

व्यवस्थापनविद्यायाः अनुसरणेन जनाः निर्दिष्टलक्ष्यपूरणाय सामाजिकसुविधां प्रदातुं च बद्धपरिकराः भवन्ति। नृपतीनां कृते अपि व्यावस्थापानविद्यायाः ज्ञानम् अपरिहार्यम्। यतः योग्यशासकाः सर्वदा प्रजानां हितसाधनाय प्रयतन्ते। प्रायशः व्यवस्थापकानां प्रबन्धकानां वा मनसि भीषणा दुश्चिन्ता जायते यत् केन प्रकारेण तेषां जीविकायाः निश्चयकरणं

भवेदिति। अस्य मौलिकप्रश्नस्य उत्तरं भगवतः श्रीमुखेन गीतायां मिलति। गीता वदति 'स्वात्मनो निष्कामकर्मयोगेन परिचालनं करणीयम्।' यावत्पर्यन्तं राजा प्रबन्धकः वा स्वस्य कार्यक्षमताम् उत्कर्षतां च न उन्नतां करिष्यति तावत्पर्यन्तम् तस्य प्रतिभायाः पूर्णविकासः न भविष्यति। सः जनसंकुले समुद्रे केवलं मुखमात्ररूपेण गणयिष्यते।

*

## सन्दर्भाः


1. अर्थशास्त्रम् 1.3,19
2. महा. शा. 74.4
3. श्रीमद्भगवद्गीता 4.7-8
4. श्रीमद्भगवद्गीता 2.50
5. श्रीमद्भगवद्गीता 9.2-3
6. श्रीमद्भगवद्गीता 15.5
7. श्रीमद्भगवद्गीता 1.30
8. श्रीमद्भगवद्गीता 2.60
9. श्रीमद्भगवद्गीता 2.50
10. श्रीमद्भगवद्गीता 3.21
11. श्रीमद्भगवद्गीता 3.22
12. श्रीमद्भगवद्गीता 15.5
13. श्रीमद्भगवद्गीता 18.43


*

## किञ्चिद् रामायणीयम्

*** हनुमता समीक्ष्यमाण रावणभवनम् –**

**राक्षसेन्द्रनिवेशनम् –**

(i) अर्कवर्णेन भास्वरेण प्राकारेण अभिसंवृतम्।

(ii) सिंहैः महद्वनम् इव भीमैः राक्षसैः रक्षितम्।

(iii) रूप्यकोपहितैः चित्रैः तोरणैः हेमभूषणैः विचित्राभिः कक्ष्याभिः रुचिरैः द्वारैश्च वृतम्।

(iv) गजास्थितैः महामात्रैः, विगतश्रमैः शूरैः, असंहार्यैः स्यन्दनयायिभिः हयैश्च उपस्थितम्।

(v) सिंहव्याघ्रतनुत्राणैः, दान्तकाञ्चनराजतैः
घोषवद्भिः विचित्रैश्च रथैः सदा विचरितम्।

(vi) बहुरत्नसमाकीर्णम्, परार्ध्यासनभूषितम्,
महारथसमावायम्, महारथमहास्वनम्।

(vii) परमोदारैः तैः तैः विविधैः बहुसाहस्रैः मृगपक्षिभिः समन्ततः परिपूर्णम्।

(viii) मुदितप्रमदारत्नम्, वराभरणसंह्रादैः समुद्रस्वननिःस्वनम्,
तद्राजगुणसम्पन्नम्, वरचन्दनैः मुख्यैश्च महाजनसमाकीर्णम्।

(ix) भरीमृदङ्गाभिरुतम्, शङ्खघोषनिनादितम्, नित्यार्चितम्, पर्वसुतम्, राक्षसैः सदा पूजितम्।

(x) समुद्रसमनिःस्वनम् समुद्रमिव गम्भीरम्।

(xi) महात्मनः महद्वश्म, महारत्नपरिच्छदम्।

(xii) महारत्नसमाकीर्णम्, गजाश्वरथसंकुलम्।

**आधारः - रामायणम्, सुन्दरकाण्डम्, 6 सर्ग**

# शब्दशुद्धिप्रतिपादने भामहवामनयोः पारस्परिकं वैमत्यम् : एकमध्ययनम्

**डॉ. मृत्युञ्जयगराँइ**

**सङ्केतशब्दाः**

काव्यशास्त्रम्, ज्ञापकविधिः, शिष्टप्रयोगः, योगविभागः, बहुलम्, वार्तिकम्, भाष्यम्, गणसूत्रम्, विकरणम्, अनुबन्धः।

**प्रस्तावना**

सुसमृद्धसंस्कृतकाव्यशास्त्रपरम्परायां भामह–वामनयोर्नाम सश्रद्धं स्मर्य्यते विपश्चिद्भिः। आचार्यद्वयं खलु नितरां सुप्रतिष्ठितमलङ्कारशास्त्रे। एकस्तु अलङ्कारनिकाये प्रसिद्धः। अपरस्तावत् रीतिप्रस्थाने सुविदितः। अनयोराचार्ययोः पौर्वापर्यविषये नास्ति किञ्चित् वैमत्यम्। वामनात् पूर्ववर्ती आसीत् भामहः– इत्येवं मतं सर्वसम्मतम्। उभयस्यैव एकैकः ग्रन्थोऽलङ्कारशास्त्रे समुपलभ्यते। भामहस्य काव्यालङ्कारः तथा च वामनाचार्यस्य काव्यालङ्कारसूत्रवृत्तिरिति। भरतादनन्तरं काव्यालङ्कारस्तावदलङ्कारशास्त्रस्य सर्वमान्यः ग्रन्थः। समग्रग्रन्थः षट्सु परिच्छेदेषु विभक्तोऽस्ति। तत्र प्रथमे काव्यशरीरनिर्णयः, द्वितीये-ऽलङ्कृतिविवेकः, तृतीये विशिष्टालङ्कृतिविचारः, चतुर्थे दोषनिर्णयः, पञ्चमे न्यायविचारः, अन्तिमे तु शब्दशुद्धिविवेकश्च प्रतिपादिताः। अत्र प्रायशः चतुःशतश्लोकाः परिदृश्यन्ते। तथोक्तं भामहेन–

**षष्ठ्या शरीरं निर्णीतं शतषष्ठ्या त्वलङ्कृतिः।**
**पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः॥**
**षष्ठ्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम्।**
**उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः॥**[1]

शब्दयुगलस्य काव्यत्वं, काव्यहेतुत्वम्, वक्रोक्तेः सकलालङ्कारमूलत्वम् इत्यादयः विषयाः ग्रन्थस्यास्य विशिष्टसिद्धान्ताः। तथा च वामनाचार्यस्य काव्यालङ्कारसूत्रवृत्तिरिति ग्रन्थोऽपि काव्यशास्त्रजगति विशेषतयादृतः। ग्रन्थोऽयं पञ्चसु अधिकरणेषु द्वादशभिरध्यायैः

विभक्तोऽस्ति। तत्र शारीरकं नाम प्रथमेऽधिकरणे काव्यप्रयोजनम्, अधिकारिचिन्ता, रीतिनिश्चयः, काव्याङ्गानि काव्यभेदादयः चित्रिताः। दोषदर्शनं नाम द्वितीयाधिकरणे काव्यदोषाः समुपवर्णिताः। तृतीये गुणविवेचनाख्येऽधिकरणे विविधाः काव्यगुणाः दर्शिताः। आलङ्कारिकाभिधेये चतुर्थाधिकरणेऽलङ्काराणां विस्तृतं विवेचनं कृतमास्ते। अन्तिमे तु प्रायोगिकमिति अधिकरणे शब्दशुद्धिरूपविषयो वर्णितोऽस्ति। काव्यात्मतत्त्वसन्धाने तथा रीतितत्त्वस्थापने ग्रन्थस्यास्य महती भूमिकाऽतीव प्रशंसनीया। वस्तुतः काव्यालङ्कारे काव्यालङ्कारसूत्रवृत्तौ च उभयोरेव शब्दशुद्धिः प्रतिपादिता। काव्ये सुचारुशब्दप्रयोगस्तावत् सर्वदाऽभिप्रेतः। सुनिश्चितशब्दचयनैरेव काव्यशरीरस्य विनिर्माणं भवतीति मतं सर्वसम्मतम्। अत एव काव्यनिर्माणाय साधुशब्दज्ञानं तु अपरिहार्यम्। काव्ये कस्तावत् शब्दः प्रयोक्तव्यः को वा परिहरणीय इत्येवं संशयः सदा वर्तते। व्याकरणशास्त्रेण संशयोऽयं दूरीभवति। यथोक्तं वामनाचार्येण–

**''शब्दस्मृतेः शब्दशुद्धिः।''**[2]

अर्थात् काव्यनिर्माणे व्याकरणज्ञानं खलु सदापेक्षितम्। अनेन कारणेनैव भामह–वामनयोः रचनायां तु शब्दशुद्धिः प्रतिपादिता। पाणिनीयव्याकरणसम्प्रदायमाश्रित्य उभयस्यैवमालोचनं विकसितम्। उभयस्य ग्रन्थस्य भाषागता प्रतिपादनशैलीगता च भिन्नता सर्वदा परिदृष्टा। इयं भिन्नता तु स्वाभाविकी। तथापि व्याकरणसिद्धान्तविषये क्वचित् कदाचित्तु प्रबलं वैमत्यमपि स्पष्टतया परिलक्षितम्। ज्ञापकविधि-शिष्टप्रयोग-योगविभाग-शर्वावित्यादीनां पदसिद्धिविषयेषु एवं वैमत्यमधिकं प्रकटितम्। तुलनात्मकशैलीमाश्रित्य एवं वैमत्यानामुपरि नातिविस्तृतालोचनाऽत्र विधीयते।

**1. ज्ञापकविधिः**

शाब्दिकनिकाये सन्दिग्धप्रयोगाणां सिद्ध्यर्थं ज्ञापकविधिराश्रीयते। भाषायां प्रयुक्तानां केषाचन शब्दानां व्याकरणशृङ्खलया कदाचित् कुत्रचित् समर्थनं नोपलभ्यते। पुनश्च शिष्टजनस्य रचनायां तु एषां प्रयोगः परिलक्ष्यते। तत्र शिष्टप्रयोगस्य प्रामाण्यं स्वीकृत्य सन्दिग्धानां शब्दानां साधुत्वं निश्चीयते। शब्दशास्त्रेऽयं विधिस्तु ज्ञापकविधिरूपेणोच्यते। ज्ञापकविधिविषयेऽस्मिन् आचार्यद्वयस्य मध्येऽपि दृश्यते काचित् विप्रतिपत्तिः। भामहाचार्यमतानुसारं स्वल्पमात्रेण ज्ञापकविधिना विहिताः शब्दाः काव्ये न प्रयोक्तव्याः। दृष्टान्तप्रदानेन विषयोऽयं स्पष्टीक्रियते भामहेन–

**नाप्रतीतान्यथार्थत्वं धात्वनेकार्थतावशात्।**
**न लेशज्ञापकाकृष्टं स हन्ति ध्याति वा यथा॥**[3]

ज्ञापकविधिना निष्पन्नं 'ध्याति' इत्येवं पदमत्र विचार्य्यते। '**धै चिन्तायाम्**'[4] इति धै–धातोः लटि तिप्–विभक्तौ ''**कर्तरि शप्**'' (3.1.38) इत्यनेन सूत्रेण शप्–विकरणे 'ध्यायति' इत्येवं रूपं सम्पद्यते। अत्र भ्वादिगणपठितत्वात्तु शप्–विकरणं निश्चितम्। परन्तु केषांचन मते, गणकार्यं तावदनित्यम्। विकरणप्रत्ययभेदेन गणव्यवस्था विहिता। परन्तु ''**व्यत्ययो बहुलम्**'' (3.1.85) इत्यनेन यथायथं विकरणाः शबादयो विहिताः, तेषां छन्दसि विषये बहुलं व्यत्ययो भवति। अनेन ज्ञापकेन गणकार्यं तावत् न खलु नित्यम् अपि तु अनित्यमिति। एवं प्रकारेण यदि कोऽपि गणकार्यमनित्यमिति मत्वा ''**अदिप्रभृतिभ्यः शपः**'' (2.4.72) सूत्रेण धै–धातोः शपो लोपं करोति तर्हि 'ध्याति' इत्येवं पदं भविष्यति। एवं पदं तु अप्रशस्तम्। भाषायां कदापि अस्य प्रयोगो नैव करणीयः। अत एव स्वल्पमात्रेण ज्ञापकेन विहितं पदं सर्वदा परिहरणीयमिति भामहाचार्यस्याशयः।

तथा च श्लोकान्तरेऽपि भामहेनोक्तम्–

**सूत्रज्ञापकगात्रेण वृत्रहन्ता यथोदितः।**
**अकेन च न कुर्वीत वृत्तिं तद्गमको यथा।।**[5]

अत्र वृत्रहन्ता तद्गमकश्चेति पदद्वयं दृष्टान्तरूपेण विचार्य्यते भामहेन। 'वृत्रस्य हन्ता' इत्यस्मिन् विग्रहेऽत्र '**षष्ठी**'(2.2.8) सूत्रेण षष्ठीतत्पुरुषसमासो दृश्यते। विग्रहस्थं 'हन्ता' इति पदं तावत् '**ण्वुल्तृचौ**'[6] सूत्रेण तृच्–प्रत्ययेन निष्पद्यते। ''**तृजकाभ्यां कर्तरि**'' (2.2.15) इत्यनेन सूत्रेण कर्तरि या षष्ठी सा तृचा अकेन च सह न समस्यते। अतोऽत्र 'वृत्रहन्ता' इत्येवं पदे षष्ठीसमासः कथं समर्थनीयः? विवक्षायामस्यां केनापि ज्ञापकसूत्रमवलम्ब्यते। '**जनिकर्तुः प्रकृतिः**' (1.4.30) सूत्रस्यास्य 'जनिकर्तुः' (जनेः कर्ता (कृ+तृच्) = जनिकर्ता, तस्य) इत्यस्मिन् पदे भगवता पाणिनिनाऽपि पष्ठीसमासः स्वीक्रियते। अत एव ज्ञापकविधिमाश्रित्य 'वृत्रहन्ता' – पदे षष्ठीसमासस्य शुद्धता केनापि आचार्येण मन्यते। एवं प्रकारेण 'तस्य गमकः (गम्+ण्वुल्)= तद्गमकः' इत्येवं षष्ठीसमासेऽपि अकप्रत्ययान्तशब्दः परिदृश्यते। '**तृजकाभ्यां कर्तरि**' (2.2.15) इति सूत्रेणाप्यत्र षष्ठीसमासस्य निषिद्धताऽस्ति। समालोचकेन अत्रापि ज्ञापकसूत्रमन्विष्यते। ''**तत्प्रयोजको हेतुश्च**'' (1.4.55) इत्यस्य सूत्रस्य 'तत्प्रयोजकः' (तस्य प्रयोजकः प्र–युज्+ण्वुल् तत्प्रयोजक, सः)– पदेऽपि सूत्रकारेण पाणिनिना षष्ठी समर्थ्यते। अनेन ज्ञापकसूत्रेण 'तद्गमकः' इति पदस्यापि समर्थनं दृश्यते। भामहाचार्यस्य मते, 'वृत्रहन्ता' इत्यादयः प्रयोगास्तावत् न तु समीचीनाः। एवं प्रयोगेषु षष्ठीनिषेधस्य स्पष्टविधानं

"**तृजकाभ्यां कर्तरि**" ( 2.2.15) इति सूत्रेण विहितम्। निषेधविधानं तावत् बलवत्तरं ज्ञापकविधेः। तस्मात् 'वृत्रहन्ता' इत्यादिषु षष्ठीसमासो नैव करणीयः। वस्तुतस्तु सूत्रलाघवार्थं भगवता पाणिनिना एवं प्रयोगः कृतः। यतश्चोक्तं शब्दशास्त्रे–

**'अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः।'**

वामनाचार्यस्तु ज्ञापकविषये विपरीतं मतं विदधाति। तस्य मते, ज्ञापकस्यैका स्वतन्त्रा भूमिकाऽस्ति शब्दशास्त्रे। दृष्टान्तस्वरूपं तेनोक्तम्–

"**बलेरात्मनेपदमनित्यं ज्ञापकात्।**"

"**बलेरनुदात्तेत्त्वादात्मनेपदं यत्, तदनित्यं दृश्यते– 'लज्जालोलं बलन्ती' इत्यादिप्रयोगेषु। तत् कथमित्याह–ज्ञापकात्।**"[7]

वस्तुतः "**अनुदात्तङित आत्मनेपदम्**"[8] इत्यनेन सूत्रेण 'बलि' इति धातोरनुदात्तेत्त्वान्नित्यमात्मनेपदस्य प्राप्तिरस्ति। परन्तु **'लज्जालोलं बलन्ती'** इत्यादिप्रयोगेषु बलि–धातोः परस्मैपदमपि दृष्टम्। अत्र बलि–धातोः परस्मैपदं कथं सिद्धम्? विवक्षायामस्यां वामनेनोक्तम्–'ज्ञापकात्'। किं पुनस्तज्ज्ञापकमत आह–

**'चक्षिङो द्व्यनुबन्धकरणम्।'**

"चक्षिङः इकारेणैवानुदात्तेन सिद्धमात्मनेपदं किमर्थं ङित्करणम्? यत् क्रियते, अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्। एतेन, वेदभर्त्सितर्जिप्रभृतयो व्याख्याताः– आवेदयति, भर्त्सयति, तर्जयतीत्यादीनां प्रयोगाणां दर्शनात्। अन्यत्राप्यनुदात्तनिबन्धनस्यात्मनेपदस्यानित्यत्वं ज्ञापकेन द्रष्टव्यमिति।"[9]

'चक्षिङ् व्यक्तायां वाचि' इति चक्षिङ् धातोः[10] 'इ', 'ङ्' चानुबन्धद्वयमस्ति। अत्र केवलम् अनुदात्तेत् 'इ'-इत्यनेनानुबन्धेनैव "अनुदात्तङित आत्मनेपदम्" (1.3.12) सूत्रेणात्मनेपदस्य प्राप्तिरस्ति। तथापि 'ङ्' इत्यनुबन्धस्यापि ग्रहणमत्र दृश्यते। शब्दशास्त्रे तु नास्ति किञ्चनाप्यनर्थकम्। अतश्चात्र ङित्करणस्यापि किञ्चित् प्रयोजनमवश्यमेवास्ति। किं तावत् प्रयोजनम् ? इत्यत्र आह वामनः–'अनुदात्तनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनार्थम्'। अर्थात् अनुदात्तेत् यदात्मनेपदं तत्तु अनित्यम्। ङित्करणरूपज्ञापकेन विषयोऽयं स्पष्टीकृतः। एवं प्रकारेण बलि–धातोः परस्मैपदमपि समर्थितम्। तस्मात् **'लज्जालोलं बलन्ती'** इत्यादिषु शिष्टप्रयोगेषु बलन्ती (बलि + शतृ + ङीप्) – पदमपि न दुष्टम्। ज्ञापकविधिमाश्रित्य एवं प्रयोगाणां शुद्धता वामनाचार्येण समर्थिता। अत एव वामनाचार्योऽपि ज्ञापकविरोधी नास्तीति।

**2. शिष्टप्रयोगः**

काव्यसर्जने कवीनां स्वतन्त्रता खलु सदाऽपेक्षिता। अपारे काव्यसंसारे कविरेव प्रजापतिः। काव्ये भावभागीरथीरूपस्वच्छन्दप्रवाहं रक्षितुं कदापि कुत्रापि व्याकरणशृङ्खलामुपेक्षन्ते कवयः। शाब्दिकदृष्ट्येयमुपेक्षा तावत् प्रामादिकत्वरूपेण परिगण्यते। परन्तु श्रद्धावन्तः सहृदया एनामुपेक्षास्थितिं सदा स्वीकुर्वन्ति। संस्कृतवाङ्मये एवमुपेक्षणीयप्रयोगस्तावत् सामान्यदृष्ट्या शिष्टप्रयोगः कविप्रयोगो वा कथ्यते। शिष्टप्रयोगस्यास्य यौक्तिकताप्रसङ्गे भामहवामनयोः पारस्पारिकं मतानैक्यमुपलक्षितम्। आचार्यभामहस्य मते, शिष्टप्रयोगं दृष्ट्वाऽशुद्धप्रयोगो नैव करणीयः। तथोक्तं काव्यालङ्कारे भामहेन–

**न शिष्टैरुक्तमित्येव न तन्त्रान्तरसाधितम्।**
**छन्दोवदिति चोत्सर्गान्न चापि च्छान्दसं वदेत्॥**[11]

शब्दशुद्धिविषये व्याकरणशास्त्रमेव प्रमाणम्, न तु शिष्टप्रयोगः। अत एव काव्ये पूर्ववर्तिना कविना प्रयुक्तः शिष्टप्रयोगः सदा परिहरणीयः। भामहाचार्यदृष्ट्या विषयोऽयं तावत् युक्तः।

साधुकाव्यनिर्माणे कवीनामत्र विशेषसतर्कता प्रतिपादिता। नवीनकविगणं प्रति अयमुपदेशस्तु अतीव प्रशंसनीयः।

अपरं तु शिष्टप्रयोगप्रसङ्गे वामनाचार्यस्य मतं खलु सदाऽकर्षणीयम्। काव्यालङ्कारसूत्रवृत्तौ कदाचित् विषयेऽस्मिन् कविगणं प्रति वामनेन उदारदृष्टिः प्रकटिता। यस्योत्कृष्टनिदर्शनं वयमत्र पश्यामः–

**मिलिक्लबिक्षपिप्रभृतीनां धातुत्वं, धातुगणस्याऽप्राप्तेः।**

**मिलति, विक्लबति, क्षपयतीत्यादयः प्रयोगाः। तत्र मिलिक्लबिक्षपि-प्रभृतीनां कथं धातुत्वम्? गणपाठाद् गणपठितानामेव धातुसंज्ञाविधानात्। तत्राह– धातुगणस्याऽप्राप्तेः। 'वर्धते धातुगण' इति हि शब्दविद आचक्षते। तेनैषां गणपाठोऽनुमतः, शिष्टप्रयोगादिति।**[12]

मिलति, विक्लबति, क्षपयतीत्यादयः प्रयोगाः संस्कृतसाहित्यजगति बहुत्र परिदृश्यन्ते। किं बहुना, प्रथितयशसः कवयोऽपि एषां सुतरां प्रयोगं कुर्वते। शब्दशास्त्रे धातुसंज्ञाविधानस्य विशेषो नियमः परिदृश्यते। ''**भूवादयो धातवः**'' (1.3.1) इत्यनेन सूत्रेण गणपाठे पठितानां क्रियावाचिनानामेव धातुसंज्ञा विधीयते। यथोक्तं न्यासटीकायाम्–

**''भू इत्येवमादयः शब्दा धातुसंज्ञका भवन्तीत्यनेन गणपाठेनैवेयं धातुसंज्ञा**

**विधीयते इति दर्शयति।**[13]

परन्तु मिलि-क्लबि–क्षपि–प्रभृतीनां पाठो गणपाठे नैवोपलभ्यते। तर्हि एषां कथं धातुत्वम्। एवं शङ्कानिरसने वामनाचार्यस्य उदारदृष्टिः परिलक्षिता। तस्य मते, धातुगणस्य समाप्तिर्नास्ति। तथा हि **'वर्धते धातुगणः'** इति शब्दविद आचक्षते। वस्तुतोऽयं नियमो यत्र तत्र न दृश्यते। शिष्टप्रयोगस्य समर्थनाय एवं नियमः। 'शिष्टप्रयोगात्' इत्यनेन वामनवचनेन धातुनामतिव्याप्तिः निवारिताऽस्तीति वक्तुं शक्यते।

शिष्टप्रयोगस्यापरप्रसङ्गोऽपि काव्यालङ्कारसूत्रवृत्तौ स्पष्टतया परिलक्षितः। तत्र शिष्टप्रयोगस्तावत् प्रमाणत्वेन गृह्यते। एवमवधारणा वयं काव्यालङ्कारसूत्रवृत्तौ पश्यामः–

**''मार्गेरात्मनेपदमलक्ष्म।''**

**'चुरादौ 'मार्ग अन्वेषणे' इति पठ्यते। 'आ धृषाद्वा' इति विकल्पित-णिच्कस्तस्माद्यदात्मनेपदं दृश्यते– 'मार्गन्तां देहभारमिति, तदलक्ष्म अलक्षणम्, परस्मैपदित्वान्मार्गेः। तथा च शिष्टप्रयोगः-'करकिसलयं धूत्वा धूत्वा विमार्गति वाससी।'**[14]

अत्र 'मार्ग अन्वेषणे' इत्यर्थकः मार्गधातुः[15] चुरादौ पठ्यते। धातुरयं तु उभयपदी। **''आ धृषाद्वा''** (गणसू. 202) इति गणसूत्रेणात्र णिच्प्रत्ययो विकल्पेन विहितः। शिष्टप्रयोगात् हेतोः धातोरस्य सामान्यतया परस्मैपदमेव दृश्यते। अत एवास्य मार्गयति मार्गति वा रूपद्वयं तु स्पष्टतया परिलक्ष्यते। सिद्धान्तकौमुदीकारस्य भट्टोजिदीक्षितस्यापि एवमभिमतम्–

**''मार्ग अन्वेषणे' इत्याधृषीयस्य तु मार्गयति मार्गति इति च गतम्।''**[16]

शिष्टप्रयोगदर्शनात् मार्गधातुर्भाषायां केवलं परस्मैपदे प्रयोक्तव्यः। परन्तु 'मार्गन्तां देहभारम्' इत्येवं आत्मनेपदरूपमपि क्वचित् दृश्यते। वामनाचार्यस्य मते, प्रयोगोऽयं अलक्ष्म दूषितो वा। तथा हि– **'करकिसलयं धूत्वा धूत्वा विमार्गति वाससी'** इत्येवं शिष्टप्रयोगात्। अतः मार्गधातोरस्य परस्मैपदं तावत् भाषायां प्रयोक्तव्यम्। वामनाचार्यस्यैतस्यां व्याख्यायां शिष्टप्रयोगस्तावत् प्रमाणत्वेनाङ्गीकृतः।

### 3. योगविभागः

इष्टप्रयोगस्य सिद्धये येषां विधीनां ग्रहणं शब्दशास्त्रे सदा वर्तते तेषाम् अन्यतमस्तावत् योगविभागः। सन्दिग्धशब्दानां सिद्ध्यर्थं किंचित् सूत्रं पृथक्-पृथक् विभज्य तस्मिन् पृथक्-पृथक् विशिष्टस्यार्थस्य योग एव योगविभागः। योगविभागेन किञ्चित् सूत्रं द्विधाविभक्तं

भवति। निदर्शनस्वरूपं '**सह सुपा**' (2.1.4) सूत्रं तावत् विचार्य्यते। सूत्रेऽस्मिन् '**सुबामन्त्रिते पराङ्गवत्स्वरे**' (2.1.2) इत्यतः 'सुप्' अनुवर्तते। तेन सुबन्तं सुबन्तेन सह समस्यते इति सूत्रार्थः। अत एव 'पूर्वं भूतः' इत्यस्मिन् विग्रहे 'पूर्वम्' इति सुबन्तं पदं 'भूतः' इत्यनेन समर्थसुबन्तपदेन सह समस्यते। "**भूतपूर्वे चरट्**" (5.3.53) इति ज्ञापकात् भूतशब्दस्य पूर्वनिपातः। फलतः 'भूतपूर्वः' इति समासयुक्तं पदं भवति।

कुत्रचित् 'पर्यभूषयत्' इत्यादिकः प्राचीनप्रयोगः प्राप्यते। 'परि अभूषयत्' इत्यस्मिन् विग्रहे परि इति पदं सुबन्तमव्ययम् अपरं तु 'अभूषयत्' इति तिङन्तं पदम्। अत एव '**सह सुपा**' (2.1.4) इत्यनेन सामान्यतया समासो न युज्यते। अत्र समाससिद्ध्यर्थं '**सह सुपा**' (2.1.4) इति सूत्रे योगविभागः क्रियते। एवं प्रकारेण सम्पूर्णं सूत्रं तावत् द्विधाविभक्तम्–

(क) "**सह**" अर्थात् सुबन्तं केनापि समर्थेन सह समस्यते। अतः 'परि' सुबन्तं पदं 'अभूषयत्' इति समर्थतिङन्तपदेन सह समस्यते। फलतः 'पर्यभूषयत्' इत्येवं समासे नास्ति कश्चन संशयः।

(ख) "**सह सुपा**" अर्थात् सुबन्तं सुबन्तेन सह समस्यते। मूलसूत्रस्यानुरूपोऽर्थः वर्तते चात्र।

एवं प्रकारेण योगविभागस्य एकमनवद्यं माहात्म्यं वर्तते शब्दशास्त्रे। परन्तु योगविभागस्यास्य प्रयोगविषये भामहवामनयोर्मध्येऽस्ति महत् वैमत्यम्। भामहाचार्यमतानुसारं तु योगविभागः सदा परिहरणीयः। तथोक्तं भामहीये काव्यालङ्कारे–

**सिद्धो यश्चोपसंख्यानादिष्ट्या यश्चोपपादितः।**
**तमाद्रियेत प्रायेण न तु योगविभागजम्।।**[17]

अर्थात् सूत्रेण, वार्तिकेन भाष्येण चैव सिद्धशब्दस्तावत् काव्ये प्रयोक्तव्यः न तु योगविभागादिति भामहस्याभिमतम्। वस्तुतस्तु व्याकरणसिद्धान्तेन येषां प्रयोगाणां समर्थनं नैवोपलभ्यते तत्रैव योगविभागोऽवलम्ब्यते। सूत्रं विभज्य केनापि प्रकारेण सन्दिग्धप्रयोगाणामत्र समर्थनं क्रियते। अनेन कारणेनैव भामहाचार्येण खलु योगविभागः परिहीयते।

परन्तु योगविभागविषये सम्पूर्णं विरुद्धमतं दर्शितं वामनाचार्येण। तस्य मते, योगविभागः कदापि तु न परिहरणीयोऽपितु वरणीयः। आचार्यस्येत्येवमभिप्रायो दृश्यते तावदस्मिन् सूत्रे–

**'नैकशब्दः सुप्सुपेति समासात्।'**

**"अरण्यानीस्थानं फलनमितनैकद्रुममिदम्।' इत्यादिषु नैकशब्दो दृश्यते,**

**स च न सिद्ध्यति। नञ्समासे हि 'नलोपो नञः' इति नलोपे, 'तस्मान्नुडचि' इति नुडागमे सत्यनेकमिति रूपं स्यात्। निरनुबन्धस्य नशब्दस्य समासे लक्षणं नास्ति। तत् कथं नैकशब्द इत्याह– सुप्सुपेति समासात्।''**[18]

प्रत्यक्षरूपेणात्र योगविभागस्योल्लेखो न दृश्यते। परन्तु 'नैक'–शब्दस्य सुप्सुपासमाससमर्थनेन योगविभागोऽपि समर्थितः। योगविभागमन्तरेण 'नैक'–शब्दस्य सुप्सुपासमासोऽसम्भव एव। इत्येवमभिमतं गोपेन्द्रत्रिपुरहरकृतकामधेनुटीकायां स्पष्टतया परिदृष्टम्–

''नञ्समासे हीति। 'नलोपो नञः' इति नकारलोपे सति, 'तस्मान्नुडचि' इति नुडागमे च कृते, अनेकमिति रूपं स्यान्न तु नैकमिति। ननु न सिद्ध्यति चेन्माऽस्तु नञ्समासः, प्रकारान्तरेण किं न स्यादित्यत आह– निरनुबन्धस्येति। सुप्सुपेति। 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यतः सुबित्यनुवृत्तौ, 'सह सुपा' इति योगविभागात् सुबन्तं पदं सुबन्तेन सह समस्यत इति समासे नैकशब्दः सिद्धो भवतीत्यर्थः।''

वस्तुतः 'न एकधा' इत्यस्मिन् विग्रहे ''**नञ्**'' (2.2.6) सूत्रेण नञोऽव्ययस्य 'एकधा' इति सुबन्तपदेन सह तत्पुरुषसमासस्य प्रसङ्गोऽस्ति। नञ्समासत्वात् ''**नलोपो नञः**'' (6.3.73) इति सूत्रेण नञो नस्य लोपः स्यादुत्तरपदे। समासेऽस्मिन् अजन्तमुत्तरपदमस्ति। तस्मात् ''**तस्मान्नुडचि**'' (6.3.74) इति सूत्रेण नुडागमे कृते अनेकमिति रूपं स्यान्न तु नैकमिति। तर्हि कथं 'नैकम्' इति रूपं सिद्धम्? सुप्सुपासमासत्वाद्। सुप्सुपासमासेनास्य समासस्य सिद्धिर्भवति। योगविभागेन '**सह सुपा**' (2.1.4) इति सूत्रं विभज्य 'एकधा' इति सुबन्तेन सह न–अव्ययस्य सुप्सुपासमासो भवति। अनेन समासेनैव 'नैकम्' इति पदं सिद्धम्। सिद्धान्तकौमुदीकारेण भट्टोजिदीक्षितेनापि एवं व्याख्या समर्थिता–

**'नैकधा' इत्यादौ तु नशब्देन 'सहसुपा' इति समासः।**[19]

एवंप्रकारेण योगविभागोऽपि समर्थितो वामनेन। वस्तुतः शाब्दिकनये योगविभागो गर्हितविधिर्नास्ति। सन्दिग्धपदसमर्थने बहुत्र बहुशः प्रथितयशसः वैयाकरणा अपि योगविभागम् आश्रितवन्तः। '**सह सुपा**' (2.1.4) सूत्रस्य भाष्ये भगवता पतञ्जलिनाऽपि योगविभाग उल्लिखितः–

**''एवं तर्हि सिद्धे सति यत्सहग्रहणं करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञायेत। सति च योगाङ्गे योगविभागः करिष्यते। सह सुप्समस्यते। केन सह? समर्थेन। अनुव्यचलत् अनुप्राविशत्।''**[20]

अत एव योगविभागः न निन्दनीयोऽपितु वरणीयः।

**4. 'शर्वौ' इत्यस्य पदव्याख्यायाम्**

'शर्वौ' इत्यादीनां पदानाम् एकशेषविषये आचार्यद्वयस्य मध्येऽस्ति महती विप्रतिपत्तिः। काव्यालङ्कारकारस्य भामहस्य मतेऽत्र एकशेषस्य प्रयोगः सदालङ्कृतः। "**पुमान् स्त्रिया**" (1.2.67) इत्यनेन सूत्रेणात्र एकशेषो विधीयते। तथोक्तं तेन काव्यालङ्कारे–

**सरूपशेषं तु पुमान् स्त्रिया यत्र न शिष्यते।**
**यथाह वरुणाविन्द्रौ भवौ शर्वौ मृडाविति॥**[21]

अर्थात् भामहाचार्यस्य मतेऽत्र 'शर्वश्च शर्वाणी च'– इत्यस्मिन्नर्थे स्त्रीप्रत्ययान्तस्य स्त्रीवाचकस्य 'शर्वाणी' पदेन सह पुंवाचकस्य 'शर्व'–पदस्य '**पुमान् स्त्रिया**' (1.2.67) इत्यनेन सूत्रेणैकशेषो विधीयते। '**सरूपाणामेकशेष एकविभक्तौ**' (1.2.64) अनेन सूत्रेणात्र एकपदमेव शिष्यते। एवंप्रकारेण 'वरुणौ', 'इन्द्रौ', 'भवौ', 'मृडौ' चेत्यादीनि पदान्यपि प्रयुक्तानि।

वामनाचार्यस्य मते एवं प्रयोगस्तु न युक्तः। शर्वावित्यत्र प्रयोगे एकशेषोऽन्वेषणीयः। यथोक्तं तेन काव्यालङ्कारसूत्रवृत्तौ–

**रुद्रावित्येकशेषोऽन्वेष्यः।**

**रुद्रावित्यत्र प्रयोगे एकशेषोऽन्वेष्योऽन्वेषणीयः। रुद्रश्च रुद्राणी चेति 'पुमान् स्त्रिया' इत्येकशेषः। स च न प्राप्नोति। तत्र हि 'तल्लक्षणश्चेदेव विशेष' इत्यनुवर्तते इति तत्रैवकारकरणात् स्त्रीपुंसकृत एव विशेषो भवतीति व्यवस्थितम्। अत्र तु 'पुंयोगादाख्यायाम्' इति विशेषान्तरमप्यस्तीति। एतेनेन्द्रौ भवौ शर्वावित्यादयः प्रयोगाः प्रयुक्ताः।**[23]

अर्थात् वामनाचार्यमतानुसारं तु शर्वावित्यादीनां प्रयोगे एकशेषस्तावत् न युक्तः। '**पुमान् स्त्रिया**' (1.2.67) इत्यनेन सूत्रेणैकशेषोऽत्र न प्रयुज्यते। तत्र हि '**वृद्धो यूना तल्लक्षणश्चेदेव विशेषः**' (1.2.65) इति सूत्रात् 'तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तते। तदिति स्त्रीपुंसयोर्निर्देशः। लक्षणशब्दो निमित्तपर्यायः। चेच्छब्दो यद्यर्थे। एवकारोऽवधारणे। विशेषो वैरूप्यम्। अर्थात् स्त्रीपुंसलक्षण एव चेद्विशेषो भवति, स्त्रीपुंसकृतमेव यदि वैरूप्यं भवतीत्यर्थः। अत एव स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् तर्हि '**पुमान् स्त्रिया**' (1.2.67) इत्यनेन सूत्रेणैकशेषः प्रयुज्यते। एव–कारेण एवं विशेषः स्पष्टतया दर्शितः। परन्तु 'शर्वश्च शर्वाणी च'–इत्यत्र स्त्रीप्रत्ययस्य विशेषं

विना विशेषान्तरमपि परिदृश्यते। किमिदं विशेषान्तरम्? कामधेनुटीकायामुच्यतेऽत्र–

'रुद्राणीत्यत्र '**पुंयोगादाख्यायाम्**' (4.1.68) इत्यनुवर्तमाने, 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' (4.1.49) इत्यादिना ङीष् विधीयते। पुंस आख्याभूतं यत्प्रातिपदिकं पुंयोगात् स्त्रियां वर्तते, तस्मात् ङीष् प्रत्ययो भवतीति। अतस्तल्लक्षणविशेषव्यतिरेकेण विशेषान्तरस्यापि विद्यमानत्वान्नात्रैकशेषप्राप्तिरिति।'

अर्थात् शर्वाणी इत्यत्रापि पुंयोगरूपविशेषः सदा वर्तते। यथोच्यते "**इन्द्रवरुण**" (4.1.49) इत्यस्य काशिकायाम्–

"इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययो भवति, आनुगागमः। येषामत्र पुंयोग एवेष्यते तेषामानुगागममात्रं विधीयते, प्रत्ययस्तु पूर्वेणैव सिद्धः। अन्येषां तूभयं विधीयते। इन्द्राणी। वरुणानी। भवानी। शर्वाणी। मृडानी।"

अनेन विशेषान्तरेणैव "**पुमान् स्त्रिया**"(1.2.67) इत्यनेनात्र एकशेषो न विधीयते। अत एव 'शर्वौ', 'वरुणौ', 'इन्द्रौ', 'भवौ', 'मृडौ' चेत्यादीनि एकशेषपदानि तावदनुचिन्त्यानि। वस्तुतोऽत्र एकशेषस्य प्रयोगो नैव करणीयः। काशिकाकारस्यापि एवमाशयः।

**उपसंहृतिः**

भामहवामनयोः उभयोः ग्रन्थयोरेव शब्दशुद्धिस्तावत् व्याकरणदृष्ट्या सम्यक्तया प्रतिपादिता। सामान्यतस्तु उभयालोचनस्य प्रकृतिः भिन्ना एव। काव्ये प्रयोज्याप्रयोज्यशब्दानामेवालोचनं केवलं काव्यालङ्कारे विवेचितम्। काव्यालङ्कारसूत्रवृत्तौ तु काव्यप्रयुक्तानां शब्दानां साधुत्वासाधुत्वं व्याकरणदृष्ट्या प्रतिपादितम्। वस्तुतः पाणिनीयव्याकरणसम्प्रदायमनुसृत्य उभयस्य विचारधारा प्रचलिता। तथापि केनचित् व्याकरणसिद्धान्तेनैव आचार्यद्वयस्य मध्ये महत् वैमत्यं प्रकटितम्। स्वकीयदृक्कोणत उभयस्यैवं वैमत्यमेव युक्तिसङ्गतम्। तथापि व्याकरणशास्त्रस्य निरपेक्षविचारधारायां तु वामनाचार्यस्य मतमधिकयुक्तिपूर्णं प्रतिभाति। किं बहुना, ज्ञापकविधि–शिष्टप्रयोग–योगविभागादयो विषयाः यत्र कठोरतया भामहेन तिरस्कृताः, ते विषयाः वामनेनादृताः। व्याकरणं प्रति वामनस्यैवमुदारदृष्टिस्तु सदा प्रशंसनीया। अत एव व्याकरणदृष्ट्या वामनमतं खल्वतीव युक्तिपूर्णमिति वक्तुं शक्यते।

*

## सन्दर्भाः


1. काव्यालङ्कारः 6.65–66
2. काव्यालङ्कारसूत्रवृत्तिः 1.3.4
3. काव्यालङ्कारः 6.26
4. धातुपाठः 980, भ्वादयः, परस्मैपदी, अकर्मकः।
5. काव्यालङ्कारः 6.37
6. 'धातोरिति वर्तते। सर्वधातुभ्यो ण्वुल्तृचौ प्रत्ययौ भवतः। कारकः। कर्ता। हारकः। हर्ता।' (काशिकावृत्तिः)
7. काव्यालङ्कारसूत्रवृत्तिः 5.2.3
8. 'अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्।' (सि. कौ., तिङन्तप्रकरणम्)
9. काव्यालङ्कारसूत्रवृत्तिः5.2.4
10. अदादयः, धा.पा.1081, आत्मनेपदी
11. काव्यालङ्कारः 6.27
12. काव्यालङ्कारसूत्रवृत्तिः 5.2.2
13. 'भूवादयो धातवः' (1.3.1) सूत्रस्य काशिकायाः व्याख्या।
14. काव्यालङ्कारसूत्रवृत्तिः 5.2.7
15. धातुपाठः 1917, चुरादौ, सेट्।
16. सिद्धान्तकौमुदी/चुरादिप्रकरणम्, पृ.414
17. काव्यालङ्कारः 6.29
18. काव्यालङ्कारसूत्रवृत्तिः 5.2.12
19. 'तस्मान्नुडचि' 6.3.74 सूत्रस्य भट्टोजिदीक्षितोक्ता वृत्तिः।
20. 'सह सुपा' (2.1.4) सूत्रस्य पतञ्जलिकृतं भाष्यम्।
21. काव्यालङ्कारः 6.32
22. 'स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्।' (सि. कौ., समासप्रकरणम्)
23. काव्यालङ्कारसूत्रवृत्तिः 5.2.1


*

## किञ्चिद् रामायणीयम्

*** राक्षसेन्द्रस्य रावणस्य निवेशने हनुमान् ददर्श –**

(i) विविधाकाराः शिबिकाः

(ii) चित्राणि लतागृहाणि चित्रशालागृहाणि च

(iii) क्रीडागृहाणि दारुपर्वतकानि च

**रावणस्य निवेशनम् –**

(i) मन्दरसमप्रख्यम्

(ii) मयूरस्थानसंकुलम्

(iii) ध्वजयष्टिभिः आकीर्णम्

(iv) अनन्तरत्ननिचयम्

(v) समन्ततः निधिजालम्

(vi) धीरनिष्ठितकर्माङ्गं भूतपतेः गृहम् इव

(vii) रत्नानाम् अर्चिभिः

रावणस्य च तेजसा

रश्मिभिः रश्मिवान् इव विरराज।

**रावणस्य निवेशने भाजनानि –**

जाम्बूनदमयानि शयनानि आसनानि च शुभ्रणि भाजनानि च।

तेषुभवनेषु रावणस्य भवनं भवनोत्तम् इत्थमासीत् –

(i) यथा कुबेरभवनं (तथा) मध्वासवकृतक्लेदम्, मणिभाजनसंकुलम्, मनोरमम्, असंबाधम्।

(ii) नूपुराणां घोषेण, काञ्चीनां निःस्वनेन च मृदङ्गतलनिर्घोषैः घोषवद्भिः विनादितम्।

(iii) प्रासादसंघातयुतम्, स्त्रीरत्नशतसंकुलम्, सुव्यूढकक्ष्यम्, महागृहम्।

**आधारः - रामायणम्, सुन्दरकाण्डम्, 6 सर्गः**

# महाकविकालिदासस्य ग्रन्थेषु पर्यावरणसंरक्षणचिन्तनम्

**डॉ. सत्येन्द्र पाण्डेयः**

महाकविकालिदासः साम्प्रतमपि संस्कृतसाहित्याकाशस्य षोडशकलासमन्वितः शरदिन्दुरिव भासते। असौ स्वकवित्वशक्त्या भाषावैभवेन कल्पनाचातुर्येण घटनासंयोजनेन च न केवलं संस्कृतसाहित्ये प्रत्युत विश्वसाहित्ये कनिष्ठिकाधिष्ठितः सञ्जातः। सहृदयसमीक्षकाः कदाचिदेनं कविकुलगुरुरूपेण कुत्रचित् कविताकामिन्याः विलासरूपेण क्वचिच्च दीपशिखारूपेण मन्यन्ते। अस्य महाकवित्वं ध्वनिकारेण आनन्दवर्धनेन समुद्घुष्टमस्ति– **'कालिदासप्रभृतयो द्वित्राः पञ्चषाः वा महाकवयो वर्तन्ते।'**[1]

आत्मश्लाघाधिया कालिदासेन यद्यपि कुत्रापि स्वविषये किमपि नोल्लिखितम्। परमन्तःसाक्ष्यं बहिःसाक्ष्यञ्चाधारीकृत्य तद्विषये विद्वांसः किमपि किमपि मतं स्थापयन्ति। अतः तस्य कालविषये जन्मस्थानविषये रचनाविषये च विद्वत्सु प्रायशः विवादो दृश्यते। परमेतस्य सप्त ग्रन्थाः स्वीक्रियन्ते। तेषु **'ऋतुसंहारम्' 'मेघदूतम्'** इति द्वे खण्डकाव्ये, **'कुमारसम्भवम्' 'रघुवंशम्'** इति द्वे महाकाव्ये, **'मालविकाग्निमित्रम्' 'विक्रमोर्वशीयम्' 'अभिज्ञानशाकुन्तलम्'** चेति त्रीणि रूपकाणि सन्ति। प्रकृतशोधपत्रे कालिदासेन निजरचनासु पर्यावरणसंरक्षणविषये स्वाभाविकतया कीदृशं चिन्तनं निर्देशो वा विहितो वर्तत इति विचार्यते।

तत्रादौ पर्यावरणविषये विचारयामः। पर्यावरण शब्दः परि + आङ् + उपसर्गद्वयपूर्वकात् वृञ् वरणे धातोः करणे अधिकरणे वा ल्युटि सिद्ध्यति। इत्थं परितः आङ् समन्तात् व्रियन्ते आच्छाद्यन्ते पृथ्वीजलादयः पदार्थाः यस्मिन् तत्पर्यावरणम्। अर्थात् दशदिक्षु दूरं यावत् यैः तत्त्वैः वयमावृताः अवच्छिन्नाः तदेवास्माकं पर्यावरणं कथ्यते। इत्थम् अस्मत्समक्षं यज्जडचेतनात्मकं पाञ्चभौतिकं स्वरूपम्, जल–वायु–वन–नदी–पर्वतादयः नानाजीवसमूहाः, समग्र–पारिस्थितिकतन्त्राणि च सन्ति तत्सर्वं पर्यावरणमित्यभिधीयते। वस्तुतः पर्यावरणमिति आधुनिकः शब्दो वर्तते। प्राचीनसंस्कृतवाङ्मये पर्यावरणकृते प्रकृतिशब्दः व्यवह्रियते स्म।

आस्माकीना भारतीया संस्कृतिः प्रकृत्या पूर्णतया गुम्फिता वर्तते। प्राचीनकालत एवैषा प्रकृतिपूजिका संस्कृतिः कथ्यते। अस्यां नदी–पर्वत–जल–वृक्षादीनां महत्त्वमतिशयेन वर्तते।

अस्माकं वैदिकाः ऋषयः लौकिकाः वाल्मीकि–व्यास–भास–कालिदासप्रभृतयः कवयः

सर्वेऽपि प्रकृतिसमाराधकाः पर्यावरणहितैषिणश्चासन्। एते सर्वदा सर्वजनहिताय सर्वजनसुखाय च प्रकृतिगत–तत्त्वानि तदधिष्ठातृदेवताश्च प्रार्थितवन्तः।

अथर्ववेदस्य पृथिवीसूक्ते ऋषिः अथर्वा राष्ट्रस्य शस्यश्यामलां भूमिमितोऽपि उत्कृष्टतमां कर्तुं वाञ्छति–

**विश्वम्भरा वसुधानि प्रतिष्ठा हरिण्यवक्षा जगतो निवेशनी।**
**वैश्वानरं बिभ्रति भूमिरग्निमिन्द्र रिषभा द्रवणे नो दधातु॥**[2]

शान्त्यध्याये पर्यावरणस्य सर्वाङ्गानि सहजतया सन्तुलितरूपेण तिष्ठेयुरिति ऋषेः कामना विद्यते– 'ॐ पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।'

अत्र महर्षेः शान्तिं प्रति य आग्रहो वर्तते स तु वस्तुतः प्रदूषणमुक्तेः एव प्रार्थना। सर्वा ओषधयः सर्वे वनस्पतयः तदैव हितकारिणः स्युः यदा ते स्वयं निर्दुष्टाः सन्तः प्राकृतिकवातावरणे तिष्ठेयुः।

एवमेव प्रकृतेः नानाविधं रमणीयं दृश्यं लौकिकसंस्कृतसाहित्यस्य अन्तरात्मनि संरक्षितं वर्तते। वस्तुतः संस्कृतकवीनां कोमला कमनीया च कल्पना अनया प्रकृत्या सह मानवस्य रागात्मकं सम्बन्धं स्थापयति येन प्रकृतेः जडात्मकस्वरूपं विनश्यति। इयं प्रकृतिः प्रतिपर्वणि सर्वेषु चोत्सवेषु मानवस्य सहकारिणी वर्तते। क्वचित्पाण्डुपत्रव्याजेनेयमश्रुपातं करोति। क्वचिन्निर्झराणां निनादे हासं प्रकटयति। क्वचित्कोकिलरवस्य व्याजेन प्रत्युत्तरति।

'ऋतुसंहारम्' कालिदासस्य प्रथमं काव्यं स्वीक्रियते। अत्र ऋतुमाध्यमेन प्रकृतेः मनोहरं वर्णनं प्राप्यते। प्रकृतिसौन्दर्यस्य सूक्ष्मं किन्तु व्यावहारिकं निरीक्षणं सहृदयदृष्ट्या कृतं कविना। ग्रीष्मर्तोस्तत्र कियत्स्वाभाविकं वर्णनं कृतं वर्तते–

**प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाह्यक्षतवारिसंचयः।**
**दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोऽयमुपागतः प्रिये॥**[3]

ग्रीष्माधिक्यप्रभावात् जन्तवः स्वशाश्वतिकविरोधं परित्यज्य अन्योन्याश्रयीभूय तिष्ठन्ति। क्वचित् फणी मयूरस्य तले निषीदति, क्वचित् दन्तिनः सिंहादपि न बिभ्यति, तृषाकुलः अपि फणी मण्डूककुलं न हन्ति। सर्वे वैरभावं विस्मृत्य सुहृद इव तिष्ठन्ति–

**'गज- गवय-मृगेन्द्राः वह्निसंतप्तदेहाः, सुहृद इव समेतां द्वन्द्वभावं विहाय।'**[4]

कालिदासदृष्ट्या कामिनीनां शृङ्गारः प्रायशः प्रकृत्यधीनः अस्ति। कामिन्यः सहजोपलब्धैः कुसुमैः लतापत्रादिभिः नैजं शृङ्गारं कुर्वन्ति स्म। अत एव तासां प्रकृतिभिः सह विशेषानुरागः

आसीत्। वर्षर्तौ मूर्ध्नः शृङ्गारस्य साधनं केसरस्य केतक्याः कदम्बस्य वा पुष्पमाला तथा च कर्णाभूषणं आसीत् ककुभद्रुमस्य मञ्जरी।[5] शरदृतुः काशांशुकं धारयन्ती, हंसरवस्य नूपुरं वादयन्ती, पक्वशालिवच्छरीरं धारयन्ती, विकसितकमलवदना नववधूरिव आयाति।[6] कविः नदीनां सरसीनाञ्च आदर्शस्थितिं वर्णयति–

**कारण्डवाननविघट्टितवीचिमालाः कादम्बसारसकुलाकुलतीरदेशाः।**
**कुर्वन्ति हंसविरुतैः परितो जनस्य प्रीतिं सरोरुहरजोऽरुणितास्तटिन्यः॥**
**सोन्मादहंसमिथुनैरुपशोभितानि स्वच्छप्रफुल्लकमलोत्पलभूषितानि।**
**मन्दप्रभातपवनोद्गतवीचिमालान्युत्कण्ठयन्ति सहसा हृदयं सरांसि॥**[7]

कामदेवस्य सर्वे सहायकाः प्रकृतावेव विद्यमानाः सन्ति। आम्रमञ्जरी एव तस्य बाणः किंशुकपुष्पमेव धनुः, भ्रमरसमूह एव ज्या, मलयानिल एव तस्य वाहको गजः वर्तते तथा च कोकिल एव गायकः–

**आम्री मञ्जुलमञ्जरी वरशरः सत्किंशुकं यद्धनु-**
**र्ज्या यस्यालिकुलं कलङ्करहितं छत्रं सितांशुः सितम्।**
**मत्तेभो मलयानिलः परभृता यद्बन्दिनो लोकजि–**
**त्सोऽयं वो वितरीतरीतु वितनुर्भद्रं वसन्तान्वितः॥**[8]

ऋतुसंहारे प्रतिसर्गान्तं कविः कामयते यत्पाठकानां कृते सर्वेऽपि षड् ऋतवः तद्वर्णनस्य भावभूमावेव व्यतीयुः। नूनमत्र कवेरभिप्रायो वर्तते यद्यस्य ऋतोः यादृशं वैशिष्ट्यं वर्तते तद्वैशिष्ट्यसमन्वितः ऋतुः पाठकानां कृते स्यात्। एतत् तदैव सम्भवति यदा प्रकृतिः सन्तुलिता स्यात्।

अस्माकम् ऋषयः महाकवयः अवगच्छन्ति स्म पर्यावरणस्य महत्त्वम्। अत एव ते प्रकृतेः सर्वेषु घटकेषु देवत्वमाधाय तेषां पूजनादिव्याजेन संरक्षणं संवर्धनं च कर्तुं मानवान् उपदिशन्ति। महाकविकालिदासः अभिज्ञानशाकुन्तलस्य मङ्गलाचरण एव अष्टमूर्तेः शिवस्य साक्षान्मूर्तीः प्रकृतिष्वेव दर्शयति– '**या सृष्टिः स्त्रष्टुराद्येति**'[9] अत्र जलाग्नि–यजमान–सूर्य–चन्द्राकाश–पृथिवी–वाय्वीति अष्टसाक्षात्मूर्तिमयं शिवं प्रार्थयते कविः समेषां संरक्षणाय। कवेः सुस्पष्टं सङ्केतो वर्तते यदेतानि तत्त्वानि शिवमयानि सन्ति न कथमपि दूषणयोग्यानि। एतेषु संरक्षितेषु निखिलं जगत् संरक्षितं स्यात्।

कालिदासस्य शकुन्तला आश्रमस्थानां वृक्षाणां लतानां जन्तूनां च कृते सोदरस्नेहं धारयति– '**अस्ति मे सोदरस्नेहोऽप्येतेषु।**' प्रकृतिसंरक्षणस्य किमधिकं सन्देशः स्याद्यत्र

प्रकृत्या सह शकुन्तलाव्यवहारमाध्यमेन कालिदासः साधारणजनान् शिक्षयति। निजपर्यावरणेन सह अन्योऽपि कीदृशः व्यवहारो भवेदिति धिया स वक्ति –

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।**
**आद्ये वः कुसुमप्रसूतिसमये यस्याः भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।**[10]

कालिदासस्य प्रकृतिः जडात्मिका नास्ति प्रत्युत संवेदनशीला वर्तते। सा चैतन्यमिव अनुभवति तद्वदेव प्रतिक्रियां विदधाति। शकुन्तलायाः प्रस्थानावसरे सा कोकिलरवेण तस्यै अनुज्ञां ददाति–

**अनुमतगमना शकुन्तला तरुभिरयं वनवासबन्धुभिः।**
**परभृतविरुतं कलं यथा प्रतिवचनीकृतं एभिरीदृशम्।।**[11]

शकुन्तलायाः प्रस्थानेन न केवलं तस्याः सख्यौ, तातकण्वः, तपस्विजनाः दुःखिताः सन्ति प्रत्युत सर्वा प्रकृतिः विह्वला अन्यमनस्का च संजाता–

**उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः।।**[12]

एवमेव शकुन्तलायाः सौप्रस्थानिकावसरे न केवलं कण्वाश्रमस्थाः तपस्विजनाः प्रत्युत तत्रस्थाः वृक्षाः लताः शब्दरहिताः जीवाश्चापि आत्मीयभावं प्रदर्शयन्ति। अत एव शकुन्तलायाः प्रस्थानकाले तस्यै सर्वे उपहारान् ददति।[13] अद्य पर्यावरणस्य संरक्षणनिमित्तं मानवस्य प्रकृत्या सह एतादृशी मनोवृत्तिरावश्यकी। सीतायाः विपत्तिकाले सर्वा प्रकृतिः सममेव शोकसंतप्तासीत् –

**नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः।**
**तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि।।**[14]

तातकण्वोऽपि लता–शकुन्तलयोर्मध्ये न कंचन भेदं मनुते। असौ ब्रवीति – **'चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च संप्रति वीतचिन्तः'**[15] एवमेव गर्भमन्थरायाः हरिण्याः अनघप्रसवस्य वृत्तान्तं प्रेषयितुं तातकण्वं प्रति शकुन्तलायाः निवेदनम् अथ च मृगपोतकेन पुत्रेण इव शकुन्तलायाः मार्गावरोधः कालिदासस्य प्रकृतिं प्रति सम्बन्धवैशिष्ट्यं बोधयति।

कुमारसम्भवे तपस्यावधौ स्वहस्ताभ्यां पालितान् वृक्षान् प्रति पार्वत्याः एतादृशं पुत्रवात्सल्यं

वर्तते यत्कुमारजन्मानन्तरमपि कथमपि न्यूनं न भवति–

**अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्त्रवणैर्व्यवर्धयत्।**
**गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति॥**[16]

महादेवोऽपि वृक्षं पुत्रवत्स्वीकृत्य तस्य रक्षणे संलग्नो भवति–

**अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन।**
**यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः॥**[17]

वृक्षारोपणं वृक्षसंरक्षणं केवलं वैयक्तिकं दायित्वं नास्ति प्रत्युत शासनस्य दायित्वं भवति। अभिज्ञानशाकुन्तले कालिदासः स्पष्टतया ब्रवीति– '**राजरक्षितानि तपोवनानि नाम।**' अत एव रघुवंशस्य पंचमसर्गे राजा रघुः कौत्सं आश्रमस्थानां वृक्षाणां सन्दर्भे पृच्छति–

**आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम्।**
**कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम्॥**[18]

अस्माकं कुशलक्षेमात्मके प्रश्ने पर्यावरणस्यापि चिन्तनं यदाभविष्यत्तदैव पर्यावरण संरक्षितमभविष्यत्। अद्य स्वार्थिनः मानवात् सर्वे जीव–जन्तवः असुरक्षितताम् अनुभवन्ति। भोजनाय, चर्मनिर्मितनानोपकरणाय, दुग्धाय, व्यापाराय च प्रकृतिगततत्त्वेषु महान् अत्याचारो भवति।

पशुषु महती संवेदना भवति। तेऽपि स्वामिनः हिताहितं जानन्ति। तेऽपि आशीर्वचनं ददति शपन्ति च। राजा दिलीपः पतिधर्मनिर्वाहार्थं रभसा पृथ्वीलोकं आगच्छन् कामधेनोरुपेक्षां कृतवानासीत् किन्तु तत्फलं जीवनस्य तृतीयामवस्थां यावत्तस्यानपत्यत्वेन संजातम्। जन्तवः अस्मत्फलसाधका एव न प्रत्युत जीवनरक्षका इति मत्वा सेवनीया इति कालिदासः नन्दिन्याः सेवामाध्यमेन अस्मान्निर्दिशति–

**प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।**
**निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः॥**[19]

अथ च यस्मिन् दिने जनाः राजा दिलीपः इव पशून्प्रति आत्मोत्सर्गं कर्तुमारप्स्यन्ते तदा नूनमेवास्माकं पर्यावरणं सुरक्षितं स्यात्–

**स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद।**
**दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः॥**[20]

इन्दुमतिस्वयम्बरे गच्छतो राज्ञः अजस्य सेनायां एको भयंकरः गजः समाययौ, सर्वा

सेना भयाक्रान्ता जाता, परमजः जानाति स्म यद्वन्यो गजः अवध्यो भवति। अत एव तं केवलं निर्वर्तयितुं मन्दवेगेन बाणं चालयति–

**तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः।**
**निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः॥**[21]

मृगयाविहारो यद्यपि राज्ञः मनोरञ्जनस्य अन्यतमं साधनं कथ्यते तस्य बहुशः प्रशंसापि प्राप्यते तथापि मृगयाप्रियस्य राज्ञः दशरथस्य मृगयाफलं कियद्दुःखकरं संजातमिति वयं जानीम एव।

निर्मला प्रकृतिः शुद्धं वातावरणं, शुचिपर्यावरणम् समेषां कृते स्वकीयं जीवनदायिनीरूपं प्रकटयति सर्वेषां हितकारिणी च भवति। विश्वामित्रेण सह रामलक्ष्मणयोः गमनावसरे प्रकृतिः नानाविधैः तान् सेवते–

**तौ सरांसि रसवद्भिरम्बुभिः कूजितैः श्रुतिसुखैः पतत्त्रिणः।**
**वायवः सुरभिपुष्परेणुभिश्छायया च जलदाः सिषेविरे॥**[22]

गोसेवारतस्य राज्ञः दिलीपस्य स्वागतं प्रकृतिः स्वरीत्या करोति– वयसां विरावैः तेषां जयघोषो भवति, बाललताः पौरकन्या इव आचारलाजैः पुष्पैः तमभिनन्दन्ति। शीतलः सुगन्धः मन्दः पवनः आतपक्लान्तं राजानं सेवते–

**पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी।**
**तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे॥**[23]

प्रकृत्या सह अस्माकं यादृशो व्यवहारो भविष्यति तादृश एव व्यवहारः सा अस्माभिः सह विधास्यति। कुशस्य पुत्रः राजा अतिथिः भुवः पालनं रक्षणं सम्यक्तया कृतवान्। अत एव भूरपि तस्मै बहुविधानि वस्तूनि अदात् –

**खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान्।**
**दिदेश वेतनं तस्मै रक्षासदृशमेव भूः॥**[24]

अयोध्यायां प्रवहमाना सरयूनदी उत्तरकोसलराजानां धात्री वर्तते। यस्याः सिकतामये तटे क्रीडयित्वा तस्याः मधुरं जलं च पीत्वा अत्रत्याः जनाः राजानश्च पुष्टाः बभूवुः। रामस्य मातेव वर्तते सा –

**यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम्।**
**सामान्यधात्रीं इव मानसं मे संभावयत्युत्तरकोसलानाम्॥**
**सेयं मदीया जननीव,**[25]

यथा कस्यचित्कुलीनपरिवारस्य पुत्रः पितुराज्ञां विनैव समागतानामतिथीनां स्वागतं करोति तथैव वृक्षाः स्वस्निग्धच्छायया मधुरफलप्रदानेन आगतानां स्वागतं कुर्वन्ति –

**छायाविनीताध्वपरिश्रमेषु भूयिष्ठसंभाव्यफलेष्वमीषु।**
**तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु॥**[26]

प्रकृतिः शुभाशुभफलयोः सूचनां प्रदाय अस्मान् सावधानान् करोति। समग्रमपि शकुनशास्त्रं प्रकृत्यधीनं वर्तते। पार्वत्याः जन्मदिवसे प्रकृतिः शुभसूचनां ददाति–

**प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि।**
**शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव॥**[27]

ये प्रकृतिं स्ववशे स्थापयित्वा तस्याः अतिदोहनं उच्छेदनं च कुर्वन्ति ते वस्तुतः आसुरीशक्तिसम्पन्नाः राक्षसाः इवाचरन्ति। तेषां विनाशाय दिव्या काचिच्छक्तिः अवतरति पाशबद्धां परतन्त्रां च प्रकृतिं पुनर्मोचयति। कंसरावणयोः दुर्दान्तशासनमिव तारकासुरः अपि सर्वां प्रकृतिं वशीकृत्य महदत्याचारं करोति स्म। सूर्य–चन्द्र–वायु– समुद्रादयः सर्वे तदधीनाः एव स्वव्यापारं कुर्वन्ति स्म। अत एव कुमारः कार्तिकेयः तं निहत्य सर्वां प्रकृतिं स्वतन्त्रां चकार। एतदाख्यानं स्पष्टतया सन्देशं ददाति यत् यः प्रकृत्या सह अन्योन्याश्रयभावेन न स्थित्वा तां बध्नाति तस्य तारकासुर इव चिन्तनीया स्थितिरेव भवति।

मेघदूतं तु पर्यावरणं प्रति कवेः हार्दिकसम्बन्धस्य साक्षादुदाहरणं वर्तते। कविः स्वकमनीयकल्पनया धूम-ज्योतिःसलिलमरुतां सन्निपातं मेघमपि दौत्यकर्मणि नियुङ्क्ते। अथ च तं कुलीनं मित्रं मत्वा अर्घ्यादिदानपुरस्सरं प्रियां प्रति सन्देशप्रेषणावसरे गन्तव्यमार्गवर्णने प्रकृतेः विविधस्वरूपं वर्णयति। तथा च तस्याः प्रकृतेः नानारूपस्य मानवीकरणं कृत्वा तया सह रागात्मिकानुभूतिं प्रदर्शयति। उदाहरणरूपेण मेघः यक्षस्य गिरेश्च मित्रमस्ति। विद्युन्नद्यौ मेघस्य प्रियतमे स्तः। यक्षिणी च तस्य भ्रातृजाया विद्यते इत्यादि।

एवमेव विक्रमोर्वशीये नाटके दृश्यमिदं परिलक्ष्यते– तत्र पुरूरवा लतारूपे परिवर्तितामुर्वशीमन्विष्यन् तस्याः विषये मयूरं, कोकिलं, चक्रवाकं, भ्रमरं, हस्तिनं, पर्वतं नदीं, कुरङ्गं चात्यन्तं विकलीभूय पृच्छति।[28] विरहातुरो राजा तरङ्गभ्रूभङ्गां विहगश्रेणिरशनां बहुशः स्खलितां नदीं प्रियतमेव पश्यति।[29] एषः राजा पुरूरवा राज्ञां यानि छत्रचामरादीनि चिह्नानि भवन्ति तानि सर्वाणि वर्षाकालीनप्रकृतौ परिपश्यति। यथा– विद्युल्लतामयं कनकरुचिरमाकाशमेव छत्रमस्ति, निचुलतरोः मञ्जरी एव चामरी, मयूरा एव वन्दिनः अथ च सानुमन्तः पर्वता एव प्रजाः सन्ति।[30] मालविकाग्निमित्रे कालिदासः प्रेम्णं वृक्षरूपेण वर्णयति –

**तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलाः**
**सम्प्राप्तायां नयनविषयं रूढरागप्रबालः।**
**हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वात्**
**कुर्यात्क्रान्तं मनसिजतरुर्मां रसज्ञं फलस्य॥**[31]

इत्थं वक्तुं शक्यते यत् कालिदासः मानवप्रकृत्योर्मध्ये तादात्म्यसम्बन्धं स्वीकरोति। असौ कथानकेषु पर्यावरणवर्णनस्यावसरं न कथमपि जहाति। एतस्य मन्तव्यमस्ति यत्मानवस्य परिधौ यानि प्रकृतिगततत्त्वानि सन्ति तानि मानवीयसत्तायाः कृते आवश्यकानि सन्ति। अत एव यद्यस्माभिः आरोग्यपूर्णं दीर्घायुष्यं जीवनं काम्यते चेदेतानि तत्त्वानि नूनमेव संरक्षणीयानि संवर्धनीयानि एतत्प्रकल्पे एव महाकवेः कालिदासस्य ''**प्रवर्ततां प्रकृतिहिताय पार्थिवः**'' इति कामना सफलीभूता भविष्यति।

*

## सन्दर्भाः


1. ध्वन्यालोकः - 1 उद्योतम्
2. पृथवीसूक्तम्, 1.6
3. रितुसंहारम्, 1.1
4. तत्रैव, 1.27
5. तत्रैव, 2.21
6. तत्रैव, 3.1
8. तत्रैव, 3.8, 11
8. तत्रैव, 6.38
9. अभि., 1.1
10. अभि., 4.9
11. तत्रैव, 4.10
12. तत्रैव, 4.12
13. क्षौमं केनचिदिन्दु अभि., 4.5
14. रघु., 14.69
15. तत्रैव, 4.13
16. कु.सं., 5.14
17. रघु., 2.36
18. तत्रैव, 5.6
19. रघु., 1.89
20. तत्रैव, 2.45
21. रघु., 5.50
22. तत्रैव, 11.11
23. तत्रैव, 2.13
24. तत्रैव, 17.66
25. रघु., 13.62-63
26. तत्रैव, 13.46
27. कु.सं., 1.23
28. विक्रमो., 4.72
29. तत्रैव, 4.52
30. तत्रैव, 4.13
31. मालविका., 4.1

# अव्ययीभावे समासान्तः–
# पाणिनिवोपदेवमतयोस्तुलनात्मकमध्ययनम्

**डॉ. अनुप कुमार रानो**

**उपक्रमः –** व्याकरणं सर्वविद्यानां मूलम्– '**व्याकरणमूलत्वात् सर्वविद्यानाम्।**' व्याकरणं तु वेदपुरुषस्य मुखरूपेण कल्पितम्– '**मुखं व्याकरणं स्मृतम्।**' वि–आ–कृ–ल्युट् = व्याकरणम्। व्याकरणस्य निर्वचनं तु– 'विविधप्रकारेणाक्रियन्ते शब्दा अनेनेति व्याकरणम्' अथवा व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येनेति व्याकरणम्।' अर्थात् येन शास्त्रेण शब्दस्य विश्लेषणं क्रियते अथवा अर्थपूर्णरूपेण शब्दस्य व्युत्पत्तिः निर्णीयते तदेव व्याकरणम्।

**पाणिनिसम्प्रदायः –** संस्कृतव्याकरणस्य सुदीर्घपरम्परा अस्ति। व्याकरणसम्प्रदायेषु पाणिनिसम्प्रदायः अतीव प्रसिद्धः। तस्य अष्टाध्यायी अद्वितीयः ग्रन्थः। अष्टाध्यायी सर्वोत्कृष्टः सुविन्यस्तः व्याकरणग्रन्थः। पृथीव्याः कस्यामपि भाषायाम् एतादृशं सम्पूर्णं व्याकरणं नोपलभ्यते। खीष्टपूर्वे पञ्चमे शतके पाणिनिः अविभक्तभारतवर्षस्य (अधुना पाकिस्तानदेशस्य) गान्धारस्य समीपे शालातुरे ग्रामे अजायत। तस्य प्रकृतनाम आहिकः, पिता शलङ्कः, माता दाक्षी, पितामहः देवलः। पणिनगोत्रत्वात् तस्य नाम पाणिनिः। तस्य अष्टाध्यायी–ग्रन्थे अष्ट अध्यायाः सन्ति। प्रत्येके अध्याये चत्वारः पादाः दृश्यन्ते। अष्टाध्यायी–ग्रन्थे 3667–संख्यकानि सूत्राणि सन्ति। केषाञ्चिन्मतेन सूत्रसंख्या 3683 इति। सूत्रसंख्याविषये मतभेदाः दृश्यन्ते।

महर्षिणा कात्यायनेन सूत्रस्य उपरि वार्तिकं विरचितम्। सूत्रस्य उक्त–अनुक्त–दुरुक्त–विषयाणां व्याख्या एव वार्तिकम्। पाणिनेः 1200 संख्यकस्य सूत्रस्य उपरि कात्यायनेन 5000–संख्यकानि वार्तिकानि विरचितानि। तस्य समयकालः खीष्टपूर्वं चतुर्थशतकम्। सूत्रस्य उपरि महर्षिणा पतञ्जलिना विरचितं महाभाष्यम्। पतञ्जलिः मगधाधिपतेः पुष्यमित्रस्य (185–149 खीष्टपूर्वाब्द) राजपुरोहितपदम् अलङ्कृतवान्। महाभाष्ये 85–संख्यके आह्निके 1713–संख्यकस्य सूत्रस्य व्याख्या अस्ति। पाणिनेः सूत्रम्, कात्यायनस्य वार्तिकम्, पतञ्जलेः महाभाष्यम्–एतत्त्रयं त्रिमुनिव्याकरणं नाम्ना परिचीयते।

पाणिनेः व्याकरणस्य उपरि बह्वयः वृत्तयः उपलभ्यन्ते। सूत्रस्यार्थविवरणं वृत्तिः। वृत्तिषु 'काशिका' अतीव प्रसिद्धा प्राचीना च (षष्ठ/सप्तम–शतकम्)। अस्याः रचयितारौ जयादित्यवामनौ। अत्र अष्टाध्यायीक्रमानुसारेण सूत्राणां व्याख्या प्राप्यते। कालक्रमेण विषयानुसारेण प्रकरणानुसारेण वा सूत्राणां व्याख्यापद्धतिः प्रारब्धा। अस्यां दिशायां प्रथमः प्रयासः धर्मकीर्तिना कृतः। तेन त्रयोदशे शतके विरचितः रूपावतारः। विमलसरस्वतिना चतुर्दशे शतके विरचिता 'रूपमाला।' पञ्चदशशतकस्य आचार्यस्य रामचन्द्रस्य 'प्रक्रियाकौमुदी' अप्यत्र उल्लेखनीया। परन्तु एतेषु ग्रन्थेषु सर्वेषां सूत्राणां विवेचनं नोपलभ्यते। अस्मिन् विषये भट्टोजिदीक्षितस्य अवदानम् अतीव महत्त्वपूर्णम्। महाराष्ट्रीयः ब्राह्मणः भट्टोजिदीक्षितः लक्ष्मीधरस्य पुत्रः आसीत्। तस्य समयकालः 1600–1650 खीष्टाब्दः। 'वैयाकरणसिद्धान्तकौमुदी' तस्य सर्वोत्तमा रचना। इयं रचना 'सिद्धान्तकौमुदी' इति नाम्नैव अतीव प्रसिद्धा। अत्र प्रकरणानुसारेण अष्टाध्याय्याः सर्वाणि सूत्राणि विवेचितानि। सूत्राणां व्याख्याकाले समुचितानां वार्तिकानां भाष्याणाञ्च समावेशोऽपि अत्र दृश्यते। आर्षप्रयोगाणां साधुत्वप्रतिपादनमपि तेन कृतम्। पाणिनिसम्प्रदाये भट्टोजिदीक्षितस्य शिष्यस्य वरदराजस्य अवदानमतीव महत्त्वपूर्णम्। तेन चत्वारः ग्रन्थाः विरचिताः– लघुसिद्धान्त-कौमुदी, मध्यसिद्धान्तकौमुदी, सारसिद्धान्तकौमुदी, गीर्वाणपदमञ्जरी च।

**मुग्धबोधसम्प्रदायः** पाणिनिपरवर्तिषु व्याकरणसम्प्रदायेषु मुग्धबोधसम्प्रदायः अतीव प्रसिद्धः। अस्य सम्प्रदायस्य प्रमुखाचार्यः वोपदेवः मुग्धबोधस्य रचयिता। ग्रन्थोऽयं पाणिन्यपेक्षया अतीव संक्षिप्तः सरलश्च। मुग्धबुद्धिजनेभ्यः इदं व्याकरणं प्रक्रियाशैल्या लिखितम्। त्रयोदशशतकस्य महावैयाकरणोऽयं केवलं 1184–सूत्रेण लौकिकसंस्कृतं शृङ्खलीकृतवान्। मुग्धबोधस्य बहवः टीकाः प्राप्यन्ते। तेषु रामचन्द्रतर्कवागीशस्य 'प्रमोदजननी' टीका, दुर्गादासविद्यावागीशस्य 'सुबोधा' च अतीव प्रसिद्धे। ग्रन्थेऽस्मिन् दश अध्यायाः दृश्यन्ते, प्रत्येके अध्याये चत्वारः पादाश्च। अद्यापि पारम्परिकविद्यालयेषु टोल-चतुष्पाठी-इत्यादिषु मुग्धबोधव्याकरणस्य चर्चा भवति। एतद्व्यतीतं वोपदेवेन बहवः ग्रन्थाः विरचिताः। तेषु कविकल्पद्रुम–काव्यकामधेनु–प्रमुखाः अतीव प्रसिद्धाः।

**पाणिनिदृशा अव्ययीभावे समासान्तः**

द्वयोः ततोऽधिकानां वा पदानां संक्षिप्तीकरणम् एकपदीकरणमेव समासः। सम्–अस्–घञ् = समासः। समासः प्रमुखतः चतुर्विधः–अव्ययीभावः तत्पुरुषः बहुव्रीहिः द्वन्द्वश्च। तत्पुरुषविशेषः कर्मधारयः, कर्मधारयभेदः द्विगुः। एतद्व्यतीतं 'सह सुपा' समासोऽपि स्वीक्रियते। पूर्वपदार्थप्रधानः समासः अव्ययीभावः। अव्ययीभावे पूर्वपदस्य

एव प्राधान्यं दृश्यते। यथा भिक्षायाः अभावः दुर्भिक्षम्, अत्र पूर्वपदस्य 'दुर्' इति निपातस्य अर्थः एव प्रधानः। भट्टोजिदीक्षितस्य मतेन समासः षड्विधः–सुबन्तेन सह सुबन्तस्य तिङन्तेन सह सुबन्तस्य, प्रातिपदिकेन सह सुबन्तस्य धातुना सह सुबन्तस्य तिङन्तेन सह तिङन्तस्य, सुबन्तेन सह तिङन्तस्य च। ग्रन्थगौरवभयात् नात्र विस्तृतरूपेण विवेचितम्।

समासस्य अन्तः समासान्तः।[1] समासस्य अन्ते ये प्रत्ययाः प्रयुज्यन्ते ते एव समासान्ताः प्रत्ययाः। सिद्धरूपप्राप्तये समासस्य अन्ते केचित् प्रत्ययाः योजनीयाः। अधातोः अनन्तरं तद्धितप्रत्ययाः प्रयुज्यन्ते, तस्मात् समासान्तः वस्तुतः तद्धितप्रत्ययः। समासभेदे प्रत्ययानामपि भिन्नता दृश्यते। यथा–

**अव्ययीभावे–** 'टच्' प्रत्ययः–शरदः समीपम् उपशरदम् (उपशरद् + टच्)।

**तत्पुरुषे–** 'टच्' प्रत्ययः–महान् राजा महाराजः (महाराजन् + टच्)।

'अच्' प्रत्ययः–मध्यं रात्रेः मध्यरात्रः (मध्यरात्रि + अच्)।

**बहुव्रीहौ–** 'असिच्'– दुष्टा मेधा यस्य सः दुर्मेधाः (दुर्मेधा + असिच् = दुमेधस् + प्रथमायाः एकवचनम्)। 'अनिच्'– तुल्यः धर्मः यस्य सः तुल्यधर्मा (तुल्यधर्म + अनिच् = तुल्यधर्मन् + प्रथमायाः एकवचनम्)।

**द्वन्द्वे–** 'टच्' – छत्रञ्च उपानह् च छत्रोपानहम् (छत्रोपानह् + टच् + प्रथमायाः एकवचनम्)।

**एतद्व्यतिरिक्ताः** अच्–अ–इत्यादयः प्रत्ययाः सर्वेषु समासेषु प्रयुज्यन्ते। यथा 'अ' प्रत्ययः–

**अव्ययीभावे–** पथः समीपम् उपपथम् (उपपथिन् + अ)।

**तत्पुरुषे–** राज्ञः पन्थाः राजपथः (राजपथिन् + अ)।

**बहव्रीहौ–** बहवः पन्थानः यस्मिन् देशे सः बहुपथः (बहुपथिन् + अ)।

अव्ययीभावे समासान्तविधायकानि सूत्राणि यथा–

**अव्ययीभावे शरत्प्रभृतिभ्यः।**[2]

अव्ययीभावे–सप्तम्याः एकवचनम्, शरत्प्रभृतिभ्यः–पञ्चम्याः बहुवचनम्। अत्र 'समासान्ताः' (पा.सू. 5.4.68) इति सूत्रस्य अधिकारः अस्ति। 'राजाहःसखिभ्यष्टच्' (पा.सू. 5.4.91) इति सूत्रतः अत्र 'टच्'–पदस्य अनुवृत्तिः भवति। अस्य वृत्तौ भट्टोजीदीक्षितेन उक्तम्– 'शरदादिभ्यष्टच् स्यात् समासान्तः अव्ययीभावे।' अव्ययीभावे

समासे शरत्प्रभृतिभ्य' शब्देभ्यः अनन्तरं समासान्तः टच्-प्रत्ययः स्यात्। अत्र प्रभृति-शब्देन विपाश्–अनस्–मनस्–उपानह्–दिव्–हिमवत्–अनडुह्–दिश्–दृश्–विश्–चेतस्–चतुर्–त्यद्–तद्–यद्–कियत्–शब्दाः बोध्याः। अत्रोदाहरणम्–

शरदः समीपम् ('अव्ययं विभक्तिसमीपसमृद्धि ...' पा.सू. 2.1.6 इति सूत्रेण सामीप्यार्थे उप–अव्ययेन सह 'शरदः' इति सुबन्तपदस्य अव्ययीभावः समासः)।

उपशरद् टच् (आलोच्यसूत्रेण अव्ययीभावे समासे शरत्–शब्दात् अनन्तरं समासान्तः टच्–प्रत्ययः स्यात्)। उपशरद् अ = उपशरद।

उपशरद सु = उपशरद अम् ('नाव्ययीभावादतोऽम्त्वपञ्चम्याः' पा.सू. 2.4.83 इति सूत्रेण अकारान्तात् अव्ययीभावात् अनन्तरं सुप्–विभक्तेः स्थाने 'अम्'–आदेशः स्यात्)।

उपशरदम् ('अमि पूर्वः पा.सू. 6.1.107 इति सूत्रेण पूर्वरूपैकादेशे पदमिदं निष्पन्नम्)।

अनुरूपमुदाहरणम् –

उपानहः समीपे उपोपानहम् (उपोपानह्+टच्)
हिमवतः समीपे उपहिमवतम् (उपहिमवत्+टच्)
चतुर्णां समीपे उपचतुरम् (उपचतुर्+टच्)
यस्य समीपे उपयदम् (उपयत्+टच्)
तस्य समीपे उपतदम् (उपतत्+टच्)
अनड्वाहं प्रति प्रत्यनडुहम् (प्रत्यनडुह्+टच्)
अनसः (शकटस्य) समीपे उपानसम् (उपानस्+टच्)
त्यस्य समीपे उपत्यदम् (उपत्यद्+टच्)।

**जरायाः जरस् च।**[3] (गणसूत्रम्)

अव्ययीभावे समासे जराशब्दस्य स्थाने जरस्–आदेशः भवति, जराशब्दात् अनन्तरं समासान्तः 'अः' प्रत्ययः अपि स्यात्। यथा–

जरायाः समीपम् ('अव्ययं विभक्तिसमीपसमृद्धि...' पा.सू. 2.1.6 इति सूत्रेण सामीप्यार्थे उप–अव्ययेन सह 'जरायाः' इति सुबन्तपदस्य अव्ययीभावः समासः), जरा ङस् उप (अलौकिकः विग्रहः, सामीप्यार्थे उप–अव्ययः)।

उपजरस् टच् ('जरायाः जरस् च' इति सूत्रेण अव्ययीभावे 'जरस्' इति पदात् अनन्तरं समासान्तः 'टच्' प्रत्ययः भवति), उपजरस् अ उपजरसम्।

**प्रतिपरसमनुभ्योऽक्ष्णः।**[4] (गणसूत्रम्)

प्रति–पर–सम्–अनु–एभ्यः शब्देभ्यः परात् अक्षिशब्दात् अनन्तरं समासान्तः 'टच्' प्रत्ययः भवति अव्ययीभावे समासे। यथा–

अक्ष्णः आभिमुख्यम् ('लक्षणेनाभिप्रती आभिमुख्ये' पा.सू. 2.1.14 इति सूत्रेण आभिमुख्यार्थे प्रति–अव्ययेन सह लक्षणस्य 'अक्ष्णः' इत्यस्य अव्ययीभावः समासः)।

अक्षि ङस् प्रति = प्रत्यक्षम्।

**अनुरूपमुदाहरणम्–**

अक्ष्णः परं परोक्षम्, अक्ष्णोः सामीप्यम् समक्षम्, अक्ष्णोः पश्चात् अन्वक्षम्।

**अनश्च**[5]

'अन्नन्तादव्ययीभावात् टच् स्यात्।' यथा–

राज्ञः समीपम् = राजन् ङस् उप = राजन् उप = उप राजन् = उप राजन् टच् उपराजम्।

अनुरूपम् उदाहरणम्– आत्मनि इति अध्यात्मम्।

**नपुंसकादन्यतरस्याम्।**[6]

अन्नन्तं यद् क्लीवं तदन्तादव्ययीभावाट्टज्वा स्यात्। यथा–

चर्मणः समीपम् = चर्मन् ङस् उप = चर्मन् उप, उप चर्मन् = उप चर्मन् टच् = उपचर्मम्।

टजभावपक्षे, उपचर्मन् उपचर्म ('नलोपः प्रातिपदिकान्तस्य' पा.सू. 8.2.7 इति सूत्रेण 'न' कारस्य लोपः) = उपचर्म सु = उपचर्म।

**नदीपौर्णमास्याग्रहायणीभ्यः।**[7]

''वा टच् स्यात्।'' अर्थात् अव्ययीभावे नदी–पौर्णमासी–आग्रहायणी एतेभ्यः शब्देभ्यः अनन्तरं समासान्तः टच्–प्रत्ययः विकल्पेन भवति। यथा –

नद्याः समीपम्–नदी ङस् उप–नदी उप– उप नदी – उपनदी टच् = उपनदम्।

टजभावपक्षे, उपनदी – उपनदि उपनदि सु – उपनदि।

**अनुरूपमुदारणम् –** पौर्णमास्याः समीपम् – उपपौर्णमासम् / उपपौर्णमासि।
आग्रहायण्याः समीपम् – उपाग्रहायणम् / उपाग्रहायणि।

**झयः**[8]

'झयन्तादव्ययीभावाट्टज्वा स्यात्।' यथा–

समिधः समीपम् – समिध् ङस् उप – समिध् उप – उप समिध् – उपसमिध् टच् = उपसमिधम्।

टजभावपक्षे, उपसमिध् सु – उपसमिध् – उपसमिद् = उपसमित्।

**गिरेश्च सेनकस्य**[9]

'गिर्यन्तादव्ययीभावाट्टज्वा स्यात्। सेनकग्रहणं पूजार्थम्।' अनन्तरं समासान्तः टच्-प्रत्ययः विकल्पेन स्यात्। सम्मानप्रदर्शनाय आचार्यस्य सेनकस्य नाम पाणिनिना अत्र गृहीतम्। यथा–

गिरेः समीपम् – गिरि ङस् उप – गिरि उप– उप गिरि – उपगिरि टच् उपगिरि अ – उपगिर् अ – उपगिर सु – उपगिर अम् – उपगिरम्।

टजभावपक्षे, उपगिरि सु – उपगिरि।

**वोपदेवदृशा अव्ययीभावे समासान्तः**

मुग्धबोधे समासस्य लक्षणन्तु– 'दैक्यं सोऽन्वये' मुग्धबोधं व्याकरणम् 318। वृत्तौ लिखितम्– 'द्वयोर्बहूनां वा दानामैक्यं ससंज्ञं स्यात्' दञ्च दञ्च ते दे, दञ्च दञ्च दञ्च तानि दानि, दे च दानि च दानि तेषाम् ऐक्यम् एकस्य भावः। 'दम्' इति पदम्, 'दानाम्' इति पदानाम्। अर्थात् द्वयोः ततोऽधिकानां वा पदानाम् एकपदीकरणमेव समासः। 'सः' इति समासः। अन्वयः इति सम्बन्धः। दुर्गाटीकानुसारेण अन्वयः इति पदस्य अर्थः पदानां परस्पराकाङ्क्षा योग्यता च। श्रीरामटीकायान्तु उक्तम्– 'अन्वयः परस्परसम्बन्धरूपः स च क्वचिद्विशेषणरूपेण क्वचिद् विशेष्यरूपेण द्वन्द्वे तु सर्वेषां दानां साहित्यरूपेण अन्वय इति। समासस्य उदाहरणम् – राज्ञः पुरुषः राजपुरुषः।

वोपदेवानुसारेण समासः षड्विधः **चः हः यः षः गः वः।** चः इति द्वन्द्वसमासः हः इति बहुव्रीहिसमासः, यः इति कर्मधारयसमासः, षः इति तत्पुरुषः समासः, गः इति द्विगुः, वः इति अव्ययीभावः। अव्ययपदपूर्वकानां पदानां समासः एव अव्ययीभावः। अयं समासः पूर्वपदार्थप्रधानः। वृत्तौ उच्यते– **'व्यपूर्वदानां वसंज्ञः स्यात्।'**

**शरद्विपाडयश्चेतोमनिविडुपानद्धिमवद्विद्दिवनडुद्दिक्चतुर्यत्तदो अः**[10]

शरद् च विपाश् च अयस् च चेतस् च मनस् च विश् च् उपानह् च हिमवच्च विद् च दिव् च अनडुह् च दिश् च चतुर् च यद् च तद् च, तस्मात् शरद्विपाडयश्चेतो-मनिविडुपानद्धिमवद्विद्दिवनडुद्दिक्चतुर्यत्तदः। अव्ययीभावे समासे एतस्मात् पदात् अनन्तरं समासान्तः 'अः' इति प्रत्ययः भवति। वृत्तिकारेण उक्तम् –

'एभ्यः अः स्यात् वे।' वः इति अव्ययीभावः। यथा–

शरदः समीपम् (सामीप्यार्थे उप–अव्ययेन सह 'शरदः' इति पदस्य अव्ययीभावः समासः) = शरद् ङस् उप (अलौकिकः विग्रहः, सामीप्यार्थे उप– अव्ययः)।

शरद् उप (सिप्[11] (सुप्)–प्रत्ययानां लोपेन)।

उप शरद् ('व्यं पूर्वम्' मु.व्या. 367 इति सूत्रेण 'उप' इति अव्ययस्य पूर्वनिपातः स्यात्)।

उपशरद् अ ('शरद्विपाडयश्चेतोमनिविडुपानद्धिमवद्विदिवनडुद्दिवचतुर्यत्तदो अः' इति सूत्रेण अव्ययीभावे 'शरद्' इति पदात् अनन्तरं समासान्तः 'अः' प्रत्ययः भवति)।

उपशरद सि ('लेः सि–औ–जस्–अम्–औ–शस्–टा–भ्याम्–भिस्-दे–भ्याम्–भ्यस्–ङसि–भ्याम्-भ्यस्-ङस्–ओस्–आम्– ङि–ओस्–सुप्' मु.व्या. 76 इति सूत्रेण प्रथमायाः एकवचने सि–प्रत्ययः भवति)।

उपशरद म् ('वात् क्तेर्मोऽतोऽप्याः' मु.व्या. 375 इति सूत्रेण अकारान्तात् अव्ययीभावात् परस्याः विभक्तेः स्थाने 'म्' स्यात्)।

उपशरदम् (सिद्धरूपम्)।

अनेन प्रकारेण उपविपाशम्, उपायसम् उपचेतसम् उपमनसम्, उपविशम्, उपोपानहम्, उपहिमवतम् उपविदम्, उपचतुरम्, उपयदम्, उपतदम् इत्यादीनां पदानामपि सिद्धिर्भवति।

**जरायाः जरस् च**[12]

अव्ययीभावे समासे जराशब्दस्य स्थाने जरस्–आदेशः भवति, जराशब्दात् अनन्तरं समासान्तः 'अ' प्रत्ययः अपि स्यात्। यथा–

जरायाः समीपम् (सामीप्यार्थे उप–अव्ययेन सह 'जरायाः' इति पदस्य अव्ययीभावः समासः)। जरा डस् उप।

जरा उप (सिप् (सुप्)–प्रत्ययानां लोपेन)।

उप जरा ('व्यं पूर्वम्' मु.व्या. 367 इति सूत्रेण 'उप' इति अव्ययस्य पूर्वनिपातः स्यात्)।

उप जरस् ('जरायाः जरस् च' इति सूत्रेण 'जरा'स्थाने जरस् आदेशः)।

उपजरस् अ ('जरायाः जरस् च' इति सूत्रेण अव्ययीभावे 'जरस्' इति पदात् अनन्तरं समासान्तः 'अ' प्रत्ययः भवति)।

उपजरस् सि।

उपजरस म् ('वात् क्तेर्मोऽतोऽप्याः' मु.व्या. 375 इति सूत्रेण अकारान्तात् अव्ययीभावात् परस्याः विभक्तेः स्थाने 'म्' स्यात्) उपजरसम् (सिद्धरूपम्)।

**सम्परप्रत्यनुभ्योऽहणः**[13]

सम्–पर–प्रति–अनु, एभ्यः शब्देभ्यः परात् अक्षिशब्दात् अनन्तरं समासान्तः 'अः' प्रत्ययः भवति अव्ययीभावे समासे। यथा– अक्ष्णोः समीपम् समक्षम्, अक्ष्णः परः परोक्षम्, अक्ष्णोः अभिमुखः प्रत्यक्षम् अन्वक्षम् च। एतेषु उदाहरणेषु 'व्यं पूर्वम्' मु.व्या. 367 इति सूत्रेण सम्–पर–इत्यादीनाम् अव्ययानां पूर्वनिपातः स्यात्। एभ्यः परात् अक्ष्णः अः स्यात्। यथा–

अक्ष्णोः समीपम् = अक्षि ओस् सम् = अक्षि सम् = सम् अक्षि = समक्षि अ (आलोच्यसूत्रेण सम्–परात् अक्षिशब्दात् अनन्तरं समासान्तः 'अः' प्रत्ययः भवति अव्ययीभावे समासे।) = समक्ष। अ = समक्ष = समक्ष सि = समक्ष म् = समक्षम्।

**अनः**[14]

वृत्तौ आह– 'अनन्तादः स्याद्वे' अर्थात् अन्–भागान्त–अव्ययीभावात् समासान्तः 'अः' प्रत्ययः स्यात्। यथा– आत्मानम् अधिकृत्य = आत्मन् अम् अधि = आत्मन् अधि अधि आत्मन् अध्य् आत्मन् = अध्यात्मन् अ = अध्यात्म अ = अध्यात्म म् =अध्यात्मम्।

**क्लीबाद्वाः**[15]

क्लीबलिङ्गे अन्-भागान्त–अव्ययीभावात् अनन्तरं विकल्पेन समासान्तः स्यात्। पूर्वसूत्रेण अन् भागान्त–अव्ययीभावात् नित्य–समासान्तविधानम्, आलोच्यसूत्रेण विकल्पविधानम्। यथा– चर्मणः समीपम् = चर्मन् ङस् उप् = चर्मन् उप = उप चर्मन् = उप चर्मन् अ (आलोच्यसूत्रेण क्लीबलिङ्गे अन् भागान्त–अव्ययीभावात् अनन्तरं समासान्तः 'अः' प्रत्ययः स्यात्) उपचर्म अ = उपचर्म सि = उपचर्म म = उपचर्मम्।

विकल्पे समासान्तविधानाभावपक्षे, चर्मणः समीपम् = चर्मन् ङस् = उपचर्मन् उप = उप चर्मन् = उपचर्म उपचर्म सि = उपचर्म ('लुक् परात्' मु.व्या. 377 इति सूत्रेण अकारान्तात् अव्ययीभावात् विभक्तेः लोपः स्यात्)।

**झप्नदीपौर्णमास्याग्रहायणीगिरेर्वा**[16]

दुर्गाटीकाकारेण उक्तम्– 'झपान्तात् नद्यादेश्च अः स्याद्वा अव्ययीभावे'। झप्[17] इति प्रत्याहारः। झ–द–ध–घ–भ–ज–ड–द–ग–ब–ख–फ–छ–ठ–थ–च–ट–क–त–प–इत्येते वर्णाः झप्–प्रत्याहारस्थाः। वर्गाणां पञ्चमेतराः सर्वे स्पर्शवर्णाः झप्–प्रत्याहारस्थाः। अव्ययीभावे झप्–प्रत्याहारस्थवर्णात् नदी–पौर्णमासी–आग्रहायणी–गिरि–एतस्मात् च शब्दात् अनन्तरं विकल्पे समासान्तः 'अः' प्रत्ययः भवति। यथा–

समिधः समीपम् = समिध् ङस् उप = समिध् उप = उप समिध् = उपसमिध् अ (ध्–कारः झप्–प्रत्याहारस्थः, तस्मात् आलोच्यसूत्रेण समासान्तः 'अः' प्रत्ययः भवति) = उपसमिध सि = उपसमिध उपसमिधम्।

विकल्पे समासान्तविधानाभावपक्षे, समिधः समीपम् = समिध् ङस् उप = समिध् उप उप समिध् = उपसमिध सि = उपसमिध् ('लुक् परात्' मु.व्या. 377 इति सूत्रेण अकारान्तात् अव्ययीभावात् विभक्तेः लोपः स्यात्) = उपसमिद् उपसमित्।

अनेन प्रकारेण नद्याः समीपम् = नदी ङस् उप = नदी उप = उप नदी = उपनदी अ (आलोच्यसूत्रेण नदीशब्दात् अनन्तरं समासान्तः 'अः' प्रत्ययः भवति) = उपनद् अ = उपनद उपनद सि = उपनदम् = उपनदम्।

विकल्पे समासान्तविधानाभावपक्षे, नद्याः समीपम् = नदी ङस् उप = नदी उप = उपनदी = उपनदी सि = उपनदी।

**तुलनात्मकः विचारः**

**अव्ययीभावे समासान्तः प्रत्ययः**

| **अष्टाध्यायी** | **मुग्धबोधं व्याकरणम्** |
| --- | --- |
| टच् | अ |

वस्तुतः टच्–प्रत्ययस्य अनुबन्धलोपेन 'अ' इति अवशिष्यते। 'हलन्त्यम्' पा.सू. 1.3.3 इति सूत्रेण 'च' कारस्य इत्संज्ञा भवति, 'चुटू' पा.सू. 1.3.7 इति सूत्रेण 'ट्'कारस्य इत्संज्ञा स्यात्, ततः 'तस्य लोपः' पा.सू. 1.3.6 इति सूत्रेण एतयोर्लोपः स्यात्। वोपदेवेन सरलताविधनाय 'अ' इति प्रत्ययः विहितः।

| **पाणिनिः** | **वोपदेवः** |
| --- | --- |
| अव्ययीभावे शरत्प्रभृतिभ्यः 5.4.107 | शरद्विपाडयश्चेतोमनिद्धिडुपानद्दिमवद्विद्दि-वनडुद्दिक्चतुर्यत्तदो अः 376 |
| जरायाः जरस् च (गणसूत्रम्) | जरायाः जरस् च 380 |
| प्रतिपरसमनुभ्योऽक्ष्णः (गणसूत्रम्) | सम्परः प्रत्यनुभ्योऽक्ष्णः 382 |
| अनश्च 5.4.108 | अनः 383 |
| नपुंसकादन्यतरस्याम् 5.4.106 | क्लीबाद्वा 384 |
| नदीपौर्णमास्याग्रहायणीभ्यः 5.4.110 | |
| झयः 5.4.111 | झप्नदीपौर्णमास्याग्रहायणीगिरेर्वा 385 |
| गिरेश्च सेनकस्य 5.4.112 | |

**द्वयोः व्याकरणयोः तुलनीयं सूत्रम्–**

अत्र लक्षणीयं यत् पाणिनिदृशैव वोपदेवेन सूत्राणि कृतानि। 'अव्ययीभावे शरत्प्रभृतिभ्यः' पा. सू. 5.4.107 इति सूत्रे पाणिनिना स्वल्पाक्षरविधानाय 'प्रभृतिभ्यः' इति शब्दस्य प्रयोगः कृतः। परन्तु 'शरद्विपाडयश्चेतोमनिविडुपानद्धिमवद्विद्दिपनडुद्दिक्चतुर्यत्तदो अः' मु.व्या. 376 इति सूत्रे स्पष्टताविधानाय शरदादीनां सर्वेषां शब्दानां योजना कृता। 'सम्परःप्रत्यनुभ्योऽक्ष्णः' मु.व्या. 382 इति सूत्रं पाणिनेः अनुरूपमेव केवलं निपातानां क्रमपरिवर्तनं वोपदेवेन कृतम्। 'क्लीबाद्वा' मु.व्या. 384 इति सूत्रे 'नपुंसक'– शब्दस्य पर्य्यायशब्दः व्यवहृतः, 'अन्यतरस्याम्' इत्यस्य 'वा'शब्देन उल्लेखः। 'नदीपौर्णमास्या-ग्रहायणीभ्यः' पा.सू. 5.4.110, 'झयः' पा.सू. 5.4.111. 'गिरेश्च सेनकस्य' पा.सू. 5.4.112 इति त्रयाणां पाणिनिसूत्राणां स्थाने वोपदेवेन 'झप्नदीपौर्णमास्याग्रहायणीगिरेर्वा' मु.व्या. 385 इति केवलं सूत्रमेकम् उपस्थापितम्। 'झय्–प्रत्याहारस्य स्थाने वोपदेवेन 'झप्'–प्रत्याहारः व्यवहृतः। वस्तुतः झय्–झप्–प्रत्याहारयोः कोऽपि भेदो नास्ति। गिरेश्च सेनकस्य' पा.सू. 5.4.112 इति सूत्रे पूर्वाचार्यस्य सेनकस्य नाम उल्लिखितम्, परन्तु वोपदेवः पूर्वाचार्यस्य नामग्रहणं न चकार।

| पाणिनिः | वोपदेवः |
|---|---|
| प्रातिपदिकात् अनन्तरं प्रथमायाः एकवचने 'सु' प्रत्ययः भवति। | प्रातिपदिकात् अनन्तरं प्रथमायाः एकवचने 'सि' प्रत्ययः स्यात्। |
| 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' पा.सू. 2.4.83 इति सूत्रेण अकारान्तात् अव्ययीभावात् अनन्तरं सुप्–विभक्तेः स्थाने 'अम्'–आदेशः भवति। | 'वात् क्तेर्मोऽतोऽप्याः' मु.व्या. 375 इति सूत्रेण अकारान्तात् अव्ययीभावात् परस्याः विभक्तेः स्थाने 'म्' इति आदेशः स्यात्। |
| 'प्रथमानिर्दिष्टं समास उपसर्जनम्' पा.सू. 1.2.43 इति सूत्रेण अव्ययानाम् उपसर्जनसंज्ञा भवति, ततः 'उपसर्जनं पूर्वम्' पा.सू. 2.2.30 इत्यनेन अव्ययानां पूर्वनिपातः स्यात्। | उपसर्जनसंज्ञा नास्ति। 'व्यं पूर्वम्' मु.व्या. 367 इति सूत्रेण अव्ययानां पूर्वनिपातः स्यात्। |
| समासानां संक्षिप्तं नामकरणं पाणिनिना न कृतम्। | समासस्य 'सः' इति संज्ञा, अव्ययीभावस्य 'वः' इति संज्ञा स्यात्। |

**आलोचनावसरे द्वयोः व्याकरणयोः ये ये भिन्नताः मया दृष्टाः–**

**उपसंहारः**

पाणिनेः परवर्तिकाले वोपदेवः मुग्धबोधनाम्ना नवीनस्य व्याकरणसम्प्रदायस्य प्रवर्तनं चकार। पाणिनिमवलम्ब्य एव तेनेदं व्याकरणं प्रणीतम्। मुग्धबुद्धिजनेभ्यः इदं व्याकरणं संक्षिप्ततया सरलतया च लिखितम्। समासानां संक्षिप्तनामकरणस्य प्रयास. अतीव प्रशंसनीयः, यथा अव्ययीभावस्य 'वः', तत्पुरुषस्य 'षः' इत्यादयः। प्रत्ययानां अनुबन्धरहितं सरलतरं रूपं तेन गृहीतम्, यथा 'टच्' इत्यत्र 'अ'। सरलताविधानाय उपसर्जनसंज्ञां परित्यज्य पूर्वनिपातः विहितः, लक्षणीयं 'व्यं पूर्वम्' मु.व्या. 367। अल्पायासेन व्याकरणशिक्षायै अस्य व्याकरणस्य तुलना नास्ति। तस्मात् अद्यापि पारम्परिकशिक्षाकेन्द्रेषु अस्य व्याकरणस्य बहुलं प्रचलनमस्ति। संस्कृतव्याकरणक्षेत्रे वोपदेवस्य अवदानं न विस्मरणीयम्।

*

**सन्दर्भाः**

1. 'समासान्ताः' पाणिनीयं सूत्रम् 5.4.68। अधिकारसूत्रमिदम्। इतः प्रारभ्यः पञ्चमाध्यायस्य अन्तिमसूत्रपर्यन्तम् अस्य सूत्रस्य अधिकारः अस्ति।
2. पा. सू. 5.4.107
3. गणसूत्रम्
4. गणसूत्रम्
5. पा. सू. 5.4.107
6. पा. सू. 5.4.109
7. पा. सू. 5.4.110
8. पा. सू. 5.4.111
9. पा. सू. 5.4.112
10. मु.व्या. 379
11. मुग्धवोधदृशा प्रथमायाः एकवचने 'सि' इति प्रत्ययः भवति।
12. मु.व्या. 380
13. मु.व्या. 382
14. मु.व्या. 384
15. मु.व्या. 385
16. मुग्धबोधानुसारेण वर्णसमाम्नायस्तु– 'अइउण्, ऋलृक्, एओङ्, ऐऔच्, हयवरट्, ञणनङम, झढधघभ, जडदगव, खफछठथ, चटकतप, शष–साद्यन्ताख्याः।'

*

## किञ्चिद् रामायणीयम्

*** रावणस्य वेश्मजालम् –**

- व्यासक्तवैदूर्यसुवर्णजालम्
- यथा प्रावृषि विद्युत् पिनद्धं सविहङ्गजालं महत् मेघजालम्।

*** विविधाः शालाः –**

- प्रधानशङ्खायुधचापशालाः
- मनोहराः विशालाः चन्द्रशालाः

*** गृहाणि –**

- नानावसुराजितानि
- देवासुरैः च सुपूजितानि
- स्वबलार्जितानि सर्वैः दोषैः परिवर्जितानि
- मयेन साक्षात् निर्मितानि इव प्रयत्नाभिसमाहितानि
- महीतले सर्वगुणोत्तराणि।

*** एकं गृहोत्तमम् –**

- उच्छ्रितमेघरूपम्
- मनोहरम्
- काञ्चनचारुरूपम्
- अप्रतिरूपरूपं रक्षाधिपस्य आत्मबलानुरूपम्
- महीतले प्रकीर्णः स्वर्गः इव
- बहुरत्नकीर्णं श्रिया ज्वलत्
- नानातरूणां कुसुमावकीर्णम्
- रजसाऽवकीर्णं गिरेः अग्रमिव

*** विमानम् –**

- नारीप्रवेकैः दीप्यमानमिव
- तडिद्भिः अर्च्यमानः अम्भोधरः इव
- हंसप्रवेकैः वाह्यमानम् इव
- श्रिया युता सुकृतं विमानम्
- यथा बहुधातुचित्रं नगाग्रम्
- यथा ग्रहचन्द्रचित्रं नभः

*** विमानद्वारा –**

महीं पर्वतराजिपूर्णा कृता
वृक्षवितानपूर्णाः शैलाः कृताः
पुष्पवितानपूर्णाः वृक्षाः कृताः
केसरपत्रपूर्णं पुष्पं कृतम्।

**आधारः - रामायणम्, सुन्दरकाण्डम्, 7 सर्गः**

# श्रीनिवासभट्टमहायोगीन्द्रकृतहठरत्नावलीदिशा प्राणायामतत्त्वविमर्शः

**अलोकबेपारी**

**आमुखम्**

इह खलु जगति कीटपतङ्गादिक्षुद्रतरजीवेभ्य आरभ्य मनुजान् यावत्सर्वे जीवा आध्यात्मिकाधिभौतिकाधिदैविकैः त्रिविधदुःखैरन्विताः दरीदृश्यन्ते। परन्तु दुःखमपनुद्य सुखमुपलब्धुं के न सततमीप्सितवन्तः ? तदुक्तम् –

**दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्।**
**सर्वाणि शान्तिमिच्छन्ति भूतानि नात्र संशयः।।**[1]

लोकेऽस्मिन् सांसारिकसुखस्य नास्ति काऽपि परिमितसीमा। मानवा एकं वस्तु प्राप्य पुनरपि इतरेतरवस्तूनि प्रति धावन्तीति इन्द्रियजन्यं जागतिकञ्च सुखं निरन्तरमवलोक्यते। अतोऽस्मिंल्लोके सुखमिदं दुःखमाश्रितम्, न तु आत्यन्तिकसुखम्। अत्र जिज्ञासाऽस्ति किम् आत्यन्तिकसुखम्? तदुक्तं यत् भगवत्साक्षात्काररूपसुखं मोक्षप्राप्तिरूपसुखं वा जीवस्याऽऽत्यन्तिकसुखं तथा च प्रधानलक्ष्यमस्ति। मोक्षप्राप्तिरूपसुखं नाम परमात्मनः प्राप्तिर्जननमरणबन्धनान्मुक्तिर्वा। परन्तु जननमरणस्वरूपात् संसारचक्रात्स्वयमेव मुक्तिर्नायाति, तत्प्राप्त्यर्थमखिलभारतीयवाङ्मयेषूच्चावचोपायाः ईक्ष्यन्ते तेष्वन्यतमाऽस्ति योगविद्या। नार्वाचीनकालात् इदानीन्तनसमयपर्यन्तं भारतीयचिन्तने आध्यात्मिकसाधनायां वा योगविद्यायाः विशिष्टस्थानं विद्यते। योगपदेनाऽत्र ज्ञान–कर्म–भक्ति–प्रेम–राज– मन्त्र–हठ–त्रिकादयो-ऽभिप्रेताः। तत्र हठयोगः स्वास्थ्यस्य संरक्षणाय विकासाय उन्नत्यर्थञ्च मनःस्थैर्याय परमपदप्राप्त्यर्थञ्च विशिष्टसाधना महाज्ञानञ्च। अतो योगमार्गमनुसृत्य आत्यन्तिकसुखं प्राप्तुमिच्छति चेद्धठयोगसाधना भृशमुत्कृष्टतमो मार्गोऽस्ति। तथा च प्रपञ्चितमेवं हठयोगप्रदीपिकायाम्–

**अशेषतापतप्तानां समाश्रयमठो हठः।**
**अशेषयोगयुक्तानामाधारकमठो हठः।।**[2]

**हठरत्नावल्याः संक्षिप्तपरिचयः—**

मध्यकालीनयुगे योगाङ्गानां विनियोगे हठयोगपरम्परा आविर्भूता बभूव। परन्तु कोऽयं हठयोगः? उच्यते यत् 'हठ' इत्यत्र 'ह'—पदेनाभिप्रायस्सूर्यः पुनश्च चन्द्र इष्टः 'ठ'-पदेन। अतस्सूर्यचन्द्रयोस्समीभावो हठयोग इति नाम्नाभिधीयते। एवमपि भणितुं शक्यते यत्राणाऽपानयोः वाय्वोरैक्यभावो हठयोग इत्युच्यते। तथा च बभाषे –

**हकारेणोच्यते सूर्यः ठकारश्चन्द्रसूचकः।**
**चन्द्रसूर्ये समीभूते हठयोगोऽभिधीयते॥**[3]

श्रीआदिनाथो महादेवशिवो वाऽस्याः हठयोगविद्यायाः प्रवर्तक आसीत्, श्रीआदिनाथेभ्यो योगिराजो मत्स्येन्द्रनाथो लब्धवान् हठयोगविद्यामिमाम्। तत्पश्चात् मत्स्येन्द्रनाथो गोरक्षनाथेन हठयोगविद्याम् अध्यापयामास। ततो श्रीगोरक्षनाथेन त्रितापपीडितमानवानां कल्याणार्थमियं हठयोगविद्या जनसम्मुखे प्रकाशिता प्रचारिता च चक्रे। हठयोगपरम्परायामस्यां शिवसंहिता, गोरक्षशतकम्, घेरण्डसंहिता, हठयोगप्रदीपिका चेत्येषां ग्रन्थानामव्यवहितपरं कलितार्किकचूडामणिश्रीनिवासभट्टकृतस्य 'हठरत्नावली' इति ग्रन्थस्य विशिष्टस्थानं परिलक्ष्यते। ग्रन्थोऽयं हठयोगशास्त्रेषु योगिकण्ठभूषणस्वरूपः। श्रीनिवासेन प्रपञ्चितमेवम् –

**ॐ आदिनाथं नत्वाऽथ श्रीनिवासो महामतिः।**
**हठरत्नावली धत्ते योगिनां कण्ठभूषिताम्॥**[4]

ग्रन्थेऽस्मिन् चत्वार उपदेशा विद्यन्ते, तत्र प्रथमोपदेशे योगस्य स्वरूपम्, अष्ट कर्माणि, योगविघ्नाश्च, द्वितीये उपदेशे कुम्भकाः मुद्राश्च, तृतीयोपदेशे आसनानि, चतुर्थोपदेशे नादानुसन्धानं पञ्चीकरणप्रक्रिया समाधिश्चेत्यादयो विषयास्सविमर्शं प्रतिपादिताः हठरत्नावलीकारेण।

**प्राणायामः**

प्राणस्याऽऽयाम इति प्राणायामः। अतः प्राणः आयामश्चेति शब्दद्वयसम्मिलितभावेन प्राणायाम इति पदन्निष्पन्नं जातम्। अत्र प्र—उपसर्गपूर्वकात् अन्—धातोरुत्तरात् अचिति प्रत्ययसंयोगे प्राण इति पदमुत्पद्यते, यस्यार्थः तावत् जीवनशक्तिः। पुनश्च आङ्—उपसर्गपूर्वकात् यम्—धातोरुत्तरात् घञि कृते निष्पद्यते आयाम इति शब्दः, अस्याऽर्थास्तावत् दैर्घ्यं विस्तारः प्रसारो नियन्त्रणञ्चेत्यादयः। अतो जीवनशक्तेः प्राणवायोर्वा प्रसारकरणं तथा च पौनःपुन्येन नियन्त्रणमिति प्राणायामस्य प्रकृष्टार्थः। अस्य लक्षणं भणितं योगसूत्रकारेण भगवता पतञ्जलिना –

**तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः।**[5]

बाह्यस्य वायोराचमनं श्वास इति कथ्यते, कौष्ठस्य वायोर्निःसारणं प्रश्वासश्च निगद्यते। एतयोरुभययोः गतिविच्छेदः प्राणायाम इति नाम्नाभिधीयते। अतोऽस्मदीयशरीरे श्वासप्रश्वासौ स्वाभाविकगत्या सञ्चाल्येते, अस्याः स्वाभाविकगत्याः विच्छेदो नाम प्राणायामः। विषयेऽस्मिन् तेजबिन्दूपनिषद्याम्नातम् –

**निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते।**[6]

इतोऽपि प्राणवायुः अपानवायुश्चोभययोस्समन्वयसाधनमेव प्राणायाम उच्यते। शाण्डिल्योपनिषदि विद्यते–

**प्राणापानसमायोगः प्राणायामो भवति।**[7]

**कुम्भकप्राणायामः**

साधारणतया प्राणायामः त्रिधा, तद्यथा– शरीराभ्यन्तरे प्राणवायुप्रवेशप्रक्रिया पूरकप्राणायाम इत्युच्यते। शरीराभ्यन्तरस्थवायुं बहिःप्रदेशे विसृज्य शरीराभ्यन्तरभागं यद् वायुशून्यं कुर्यात्तदेव रेचको निगद्यते। पुनश्च श्वासप्रश्वासयोः रेचकपूरकयोर्वाऽभावः कुम्भकप्राणायामो भण्यते। योगसूत्रव्यासभाष्ये बभाषे भाष्यकारव्यासदेवः– **यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः, यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः। तृतीयः स्तम्भवृत्तिर्यत्रोभया-भावः... ...॥**[8]

अतः पूरकक्रियायाः पश्चात् कियत्समयं यावत् प्राणवायुधारणम्, पुनश्च रेचकप्राणायामात् परं कियत्समयं यावत् प्राणवायोर्न ग्रहणमिति प्रक्रियाद्वयं सहितकुम्भकं भणन्ति सूरिणः। एतदपि निगदितुं शक्यते सहितकुम्भकप्राणायामः पूरकरेचकसमन्वितः। पुनश्च रेचकपूरकौ व्यतिरिच्य यस्य कुम्भकस्यानुष्ठानं परिदृश्यते तदेव केवलकुम्भक इति नाम्ना प्रसिद्ध्यति।

हठरत्नावलीकारैः कुम्भकप्राणायामस्याऽस्य अनुष्ठानप्रणाली उच्यते यत् पूरकान्ते जालन्धरबन्धं सम्पाद्य कुम्भकोऽनुष्ठानीयः। कुम्भकान्ते रेचकादौ च उड्डीयानको नामकबन्धः कर्तव्य इति। तदुक्तञ्च –

**पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः।**
**कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियानकः॥**[9]

**कुम्भकस्य प्रकारभेदः**

कलितार्किकचूडामणिश्रीनिवासभट्टकृतहठरत्नावल्यां नवसंख्यकाः कुम्भकाः विद्यमानास्सन्ति। अतस्तत्र प्रागाचार्यैरुक्ता अष्टविधाः कुम्भकाः प्रतिपादिताः श्रीनिवासभट्टमहायोगीन्द्रैः केवलं 'भुजङ्गकरणी' इति नामकोऽन्तिमकुम्भको नवमकुम्भको

वा अधिकतया प्रपञ्चितः। ते तावत् –

**कुम्भकस्य प्रकारभेदः**




अधः सम्यक्तया उपर्युक्तकुम्भकाः हठरत्नावलीमाश्रित्य यथामति मया आलोच्यन्ते –

**1. सूर्यभेदीकुम्भकप्राणायामः**

आयुर्वेदानुसारमस्मदीयनासारन्ध्रद्वयं नाडीद्वययोः पिङ्गलानाडीडानाड्योर्वा प्रतिनिधिस्वरूपमिति। तत्र पिङ्गलानाडी सूर्यस्वरूपा तथा च अस्याः नाड्याः नामान्तरमस्ति सूर्यनाडी दक्षिणनाडी च। अतो दक्षिणनाड्या बाह्यस्य वायोराचमनमेव सूर्यभेदी प्राणायामो निगद्यते। प्रसङ्गेऽस्मिन् श्रीनिवासभट्टैरुक्तम् –

**दक्षनाड्या समाकृष्य बहिःस्थं पवनं शनैः।**
**यथा लगति कण्ठात्तु हृदयावधि सस्वनम्॥**
**यथेष्टं कुम्भयेद्वायुं रेचयेदिडया ततः॥**[10]

अतस्सर्वादौ पिङ्गलानाड्या दक्षिणनाड्या वा बहिः प्रदेशस्थितसमीरं शनैश्शनैरा-कृषेत्। ततो यथासामर्थ्यं कुम्भकमनुष्ठाय इडया वामनासिकया वा वायुं रेचयेदिति। परन्तु वायुप्रवेशकाले कण्ठात् हृदयपर्यन्तं वायुस्पर्शेन सुमधुरध्वनिरुत्पादनीय इत्यत्र लक्षणीय-विषयः।

एतस्मात्कुम्भकत्वात् कपालं शिरःस्थितखण्डं वा शुध्यति, आलस्यं वातदोषं कृमिकीटञ्च विनश्यति। अतः पौनःपुन्येन सूर्यभेदी कुम्भकोऽनुष्ठानीयः, परन्तु अधिकोष्णसमयेषु प्राणायामोऽयं न सम्पादनीयः। तथा च प्रपञ्चितमेवम् –

**कपालं शोधनं चापि रेचयेत्पवनं शनैः।**
**आलस्यं वातदोषघ्नं कृमिकीटं निहन्ति च॥**[11]

**2. उज्जायीकुम्भकप्राणायामः**

उज्जायीति संस्कृतशब्दः, यस्यार्थस्तावत् विजयी। श्रीनिवासभट्टस्वीकृतेषु प्राणायामेषु उज्जायीकुम्भकस्य विशिष्टस्थानं विद्यते। कुम्भकस्यास्य सम्पादनप्रणाली सम्यक्तया प्रतिपाद्यते श्रीसरवरस्याऽऽत्मजेन श्रीनिवासभट्टेन –

**मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः।**
**यथा लगति हृत्कण्ठं हृदयावधि सस्वनः॥**
**पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया ततः॥**[12]

आदौ आस्यं संयमेत्, ततो दक्षिणवामनासिकाभ्यां बहिः प्रदेशस्थितवायुं मन्थरगत्या शरीरस्याऽभ्यन्तरे एवंरूपेणाऽनिलं प्रवेशयेत् यथा प्रवेशकाले कण्ठात् हृदयावधिः वायुस्पर्शेन सुमधुरध्वनिर्भवति। तत्पश्चात् यथेष्टं कुम्भकमप्यनुष्ठाय वामनासिकया इडानाड्या वा शरीरान्तःस्थितमनिलं विसर्जयेदिति।

कुम्भकेनानेन कफजन्याः कण्ठदोषाः, नाडीदोषाः, उदरगतधातुविकाराश्चेत्यपचीयन्ते। इतोऽपि जठराग्निरभिवर्धते। प्राणायामस्याऽस्याऽभ्यासस्सदा करणीयः। प्रसङ्गेऽस्मिन् बभाण ग्रन्थकारः –

**गले श्लेषमहरं प्रोक्तं देहानलविवर्धनम्।**
**नाडीजालोदराधातुगतदोषविनाशनम् ॥**[13]

**3. सीत्कारकुम्भकप्राणायामः**

हठयोगाङ्गपरम्परायां सीत्कारकुम्भकोऽन्यतमोऽस्ति। सीत्कारध्वनिर्नाम 'सी सी– ध्वनिः'। ध्वनिमिमं सृजन् आस्येन समीरं पूरयित्वा घ्राणेन्द्रियेण नासिकारन्ध्राभ्यां वाऽनिलमुत्सर्जयेदिति प्रक्रिया सीत्कारकुम्भकः कथ्यते। तथा च परिदृश्यते हठरत्नावल्याम्-

**सीत्कां कुर्यात्तथा वक्त्रे घ्राणेनैव विसर्जयेत्।**
**एवमभ्यासयोगेन कामदेवो द्वितीयकः॥**[14]

एवंप्रकारेणाऽभ्यासेन भूतले साधको योगी वा कामदेववत् योगीन्द्रवच्च अवलोक्यते। पुनश्च साधकाः क्षुधा, पिपासा, निद्रा, आलस्यञ्चेत्येतैराकृष्टाः नैव भवन्ति। इतोऽपि वक्तुं पार्यते यत् योगिनः सर्वे उपद्रववर्जिताः सृष्टिसंहारक्षमतासमन्विताः स्वच्छन्ददेहसंयुक्ताः स्युः। तथा च प्रपञ्चितमेवम् –

**योगिनीचक्रसंसेव्यः सृष्टिसंहारकारकः।**
**न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते॥**

**भवेत्स्वच्छन्ददेहस्तु सर्वोपद्रववर्जितः।**
**अनेन विधिना सत्यं योगीन्द्रो भाति भूतले॥**[15]

**4. शीतलीकुम्भकप्राणायामः**

नासिकामुखकण्ठजिह्वादिभिः श्वासप्रश्वासकार्यं सम्पादयितुमर्हामः। शीतली-कुम्भकप्राणायामे श्वासप्रक्रियार्थं रसेन्द्रियस्योपयोगो दृश्यते। संस्कृतशीतशब्दात् निष्पन्नोऽयं शीतलीशब्दः, यस्यार्थस्तावत् शीतलः। अतश्शीतलीकुम्भकानुशीलनेन शरीरस्थितातिरिक्तोष्णता निर्गच्छति, शरीरं शीतलं भवतीत्यर्थः। प्राणायामस्यास्य अनुष्ठानप्रणाल्यस्ति – रसनेन्द्रियेण जिह्वया वाऽनिलमाकृष्य यथेष्टं कुम्भकक्रियामनुष्ठाय घ्राणेन्द्रियेण शरीरान्तःस्थितो वायुः रेचयितव्य इति प्रक्रिया शीतलीप्राणायामो नाम्नाभिधीयते। एवंरूपेणाऽशीतिवार-शीतलीप्राणायामोऽनुष्ठीयेत।

**जिह्वया वायुमाकृष्य पूर्ववत्कुम्भकादनु।**
**शनैरशीतिपर्य्यन्तं रेचयेदनिलं सुधीः॥**[16]

प्राणायामोऽयं गुल्मप्लीहोदररोगनाशको ज्वरपित्तदोषनिवारको विषोच्छेदकः क्षुत्पिपासातृषाहारकश्च।

**गुल्मप्लीहोदरं दोषं ज्वरपित्तक्षुधातृषाः।**
**विषाणि शीतली नाम कुम्भकोऽयं निहन्ति च॥**[17]

**5. भस्त्रिकाकुम्भकप्राणायामः**

प्राणामायोऽयं हठयोगस्यांशोऽस्ति। नार्वाचीनकाले योगिभिः प्राणामायोऽयमग्निदेवस्य श्वसनकार्यमिति नाम्ना प्रपञ्चितमस्ति। श्रीनिवासभट्टमहायोगीन्द्रः उवाच हठरत्नावल्याम् –

**रेचकः पूरकश्चैव कुम्भकः प्रणवात्मकः।**
**रेचकोऽजस्रनिःश्वासः पूरकस्तन्निरोधकः।**
**समानसंस्थितो योऽसौ कुम्भकः परिकीर्तितः॥**[18]

रेचकपूरककुम्भकाः प्रणवात्मकाः। अत ओङ्कारोच्चारणेन साकं पूरकरेचककुम्भकाः सम्पादनीयाः। विरामरहितभावेन पूरको रेचको च करणीयः, पुनश्च पूरकरेचकयोः समस्थितिसम्पादनमेव भस्त्रिकाकुम्भक इत्युच्यते।

कुम्भकस्याऽस्याऽपरविधिरपि परिलक्ष्यते हठरत्नावल्यां तद्यथा– सर्वादौ लोहकारभस्त्रीवेगवद् यथासामर्थ्यं रेचकपूरकौ कर्तव्यौ। ततो मन्थरगतिपूर्वकं पिङ्गलानाड्या दक्षिणनासिकया वा पूरकक्रिया अनुष्ठातव्या, यावत्पर्यन्तमुदरं पूर्णं न भवति। तत्पश्चात्

मध्यमातर्जन्यङ्गुल्यौ व्यतिरिच्य इतराङ्गुलीभिः सम्यक्तया नासिकां बन्धयित्वा पूर्वोक्तविध्यनुसारेण कुम्भकं सम्पाद्य इडानाड्या वामनासिकया वा रेचनक्रिया कर्तव्या इति। तथ चोक्तम् –

**यथैव लोहकाराणां भस्त्री वेगेन चाल्यते।**
**तथैव स्वशरीरस्थं चालयेत्पवनं सुधीः॥**
**यथा श्रमो भवेद् देहे तथा सूर्येण पूरयेत्।**
**यथोदरं भवेत्पूर्णं पवनेन तथा लघु॥**
**धारयेन्नासिकां मध्यातर्जनीभ्यां विना दृढम्।**
**कुम्भकं पूर्ववत्कृत्वा रेचयेदिडयानिलम्॥**[19]

कुम्भकस्यास्याऽभ्यासत्वेन वातपित्तकफादयो दोषाः दूरीभवन्ति, जठराग्निः शरीराग्निर्वा प्रदीप्यते, ब्रह्मनाडीमुखे संस्थितकफाद्यर्गलो विनश्यते। प्रसङ्गेऽस्मिन् परिदृश्यते श्रीनिवास-भट्टकृतहठरत्नावल्याम् -

**वातपित्तश्लेषमहरं शरीराग्निविवर्धनम्।**
**ब्रह्मनाडीमुखेनसंस्थकफाद्यर्गलनाशम्।**
**विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम्॥**[20]

**6. भ्रामरीकुम्भकप्राणायामः**

श्रीनिवासभट्टकृतहठरत्नावल्यामुपस्थितेषु कुम्भकेषु भ्रामरीकुम्भकप्राणायामस्य विशिष्टस्थानमवलोक्यते। भ्रमरशब्दान्निष्पन्नस्य भ्रामरीपदस्यार्थस्तावत् सनादं भ्रमर इति। कुम्भकस्याऽस्याऽनुष्ठानकाले नासिकातः मृदुनादं निस्सरति यद् भ्रमरनादवत्, इत्यस्मात्कारणात्प्राणायामोऽयं भ्रामरीकुम्भक इत्यभिधीयते। कुम्भकस्याऽस्य कार्यप्रणाली दृश्यते यत् – यथा भ्रमरो भृङ्गो वा भ्रमणसमये तीव्रध्वनिं सृजति, तथैव आशुवेगेन पूरकस्सम्पादनीयः। ततो भ्रमरीवद् भृङ्गिवद् वा मन्दगत्या रेचकक्रिया अनुष्ठातव्या। तथा च भणितं श्रीनिवासेन –

**वेगोद्घोषं पूरकं भृङ्गनादं भृङ्गीनादं रेचकं मन्दमन्दम्।**
**योगीन्द्राणां नित्यमभ्यासयोगाच्चित्ते जाता काचिदानन्दलीला॥**[21]

एतस्मात्प्राणायामाभ्यासत्वात् योगिनां मनः सानन्दं स्यात्। इतोऽप्यनेन नासिका-कर्णचक्षुर्ग्रीवादिषु उत्पन्नोपतापाः विनष्टाः जायन्ते।

**7. मूर्च्छाकुम्भकप्राणायामः**

मूर्च्छाकुम्भकप्राणायाम इति नाम्नाऽवगम्यते यत् येन प्राणायामेन मूर्च्छितो भवति स

एव मूर्च्छाप्राणायामः। अत्र मूर्च्छितपदेन मनो गृह्यते, न तु साधकः। अतो हठरत्नावल्यां ग्रन्थकारश्रीनिवासभट्टेन भाषितमेवम्–

**पूरकान्ते गाढतरं बद्ध्वा जालन्धरं शनैः।**
**रेचयेन्मूर्च्छनाख्योऽयं मनोमूर्च्छा सुखप्रदा॥**[22]

अतस्सर्वादौ पूरकमनुष्ठाय पूरकान्तिमे जालन्धरबन्धेन समीरं कियत्समयं यावन्निरुध्येत। ततो मन्थरवेगेन रेचकोऽनुष्ठीयत इति मूर्च्छाप्राणायामस्य कार्यप्रणाली। एषो मूर्च्छाकुम्भकस्सुखप्रदो भवति। इतोऽपि चिन्तायाः मानसिकसमस्याः च हारकः। स्मरणशक्तिर्दृष्टिशक्तिश्च अभिवर्धते कुम्भकेनानेन।

**8. केवलकुम्भकप्राणायामः**

प्राणायामकार्यं त्रिविधप्रक्रियाभिः सम्पूरयति। तद्यथा रेचकः, पूरकः, कुम्भकश्च। पुनश्च सहितकेवलभेदेन कुम्भकः प्रधानतः द्विधा। सरेचकं सकुम्भकञ्च च, या कुम्भकप्रक्रिया सा सहितकुम्भको निगद्यते। परन्तु रेचकपूरकौ व्यतिरिच्य यस्य कुम्भकस्यानुष्ठानं दृश्यते तदेव केवलकुम्भक इति नाम्ना प्रसिध्यति। प्राणायामस्याऽस्य अनुरूपानुष्ठानप्रणाली श्रीनिवासभट्टकृतहठरत्नावल्यामवलोक्यते –

**रेचकं पूरकं मुक्त्वा सुखं यद्वायुधारणम्।**
**प्राणायामोऽयमित्युक्तः स वै केवलकुम्भकः॥**[23]

अतो रेचकक्रियां पूरकक्रियाञ्च परित्यज्य ससुखं वायुधारणं खलु केवलकुम्भक इत्युच्यते। केवलकुम्भकप्राणायामः सिद्ध्यते चेदस्मिन्नखिलजगति विद्यमानानि सर्वाणि वस्तूनि योगिनां साधकानां वा समीपं न दुर्लभानि। केवलकुम्भकाभ्यासात् वायुधारणसामर्थ्यम् अभिवर्धते। प्रसङ्गेऽस्मिन् बभाषे शशधरमणिकण्ठव्याख्याकर्ता श्रीनिवासभट्टः –

**न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते॥**
**शक्तः केवलकुम्भकेन यथेष्टं वायुधारणम्।**
**एतादृशो राजयोगः कथितो नात्र संशयः॥**[24]

**9. भुजङ्गीकरणकुम्भकप्राणायामः**

कलितार्किकचूडामणिश्रीनिवासभट्टस्वीकृतेषु प्राणायामेषु नवमोऽन्तिमश्च प्राणायामो विद्यते भुजङ्गीकरणकुम्भकः। अस्य अनुशीलनपद्धतिरुच्यते ग्रन्थकारेण –

**कण्ठेन पूरयेद्वायुं रेचयेत्कण्ठनालतः।**
**भुजङ्गीकरणं चेति कुम्भकोऽयं नवमः स्मृतः॥**[25]

अतः कण्ठेन वायुं पूरयित्वा कण्ठेनापि वायुं रेचयेदिति प्रक्रिया भुजङ्गीकरणकुम्भको निगद्यते। भुजङ्गीकरणकुम्भकाभ्यासात् किं फलं प्राप्यते इति विषयं नोक्तवान् हठरत्नावली-कारः, तत्सत्त्वेऽपि वक्तुमर्हति यत् ग्रीवामुखमध्ये उत्पन्नरोगं विनश्यति, ऊर्ध्वरक्तसञ्चालनं नियन्त्रयति च।

**प्राणायामाभ्यासार्थं प्रयोजनीया विषयाः**

योगाभ्यासो हठयोगाभ्यासो वा एका पुण्यसाधना। साधनायामस्यां साफल्यं प्राप्तुमिच्छति चेत्कश्चित् प्रयोजनीयविषयं प्रति ध्यायेदिति। अत उपर्युक्तप्राणायामाभ्यासात्प्राक् समुचितं स्थानम्, आदर्शकालः, उपयुक्तभोजनम्, नाडीशुद्धिश्चेति अवश्यमेव लक्षणीयविषयाः। प्रसङ्गेऽस्मिन् श्रीघेरण्डेन भाष्यते घेरण्डसंहितायाम् –

**आदौ स्थानं तथा कालं मिताहारं तथापरम्।**
**नाडीशुद्धिञ्च तत्पश्चात् प्राणायामञ्च साधयेत्॥**[26]

**( क ) स्थाननिर्णयः –** यस्मिन् कस्मिन्नपि स्थाने योगाङ्गस्य प्राणायामस्य चानुष्ठानं न कर्तव्यम्। यतो हि समुचितस्थानमतिरिच्य कस्मिन्नपि महत्कार्ये सफलता नायाति। अतः प्राणायामाभ्यासार्थम् उचितस्थानस्यावश्यकता परिलक्ष्यते। श्रीनिवासभट्टमहायोगीन्द्रेण तदीये 'हठरत्नावली' इति ग्रन्थ उक्तम् –

**सुराष्ट्रे धार्मिके देशे सुभिक्षे निरुपद्रवे।**
**एकान्तमठिकामध्ये स्थातव्यं हठयोगिना॥**[27]

प्राकृतिकसम्पद्भिः वनजसम्पद्भिश्च परिपूर्णराष्ट्रं सुशोभितराष्ट्रञ्च सुराष्ट्रमिति, यत्र मनुजाः पवित्रहृदयान्विताः मनोरमप्रकृतिसम्बन्धिताः धर्मज्ञानसंयुक्ताश्च दरीदृश्यन्ते तद्धार्मिकदेशः, सुभिक्षे इत्युक्ते यत्र अन्नजलफलमूलादीनां नाभावः, निर्गत उपद्रवो यस्मादिति निरुपद्रवोऽर्थात् उत्पातरहितश्चेति। एतेषु निर्दिष्टस्थानेषु मठिकां निर्माय योगिनः योगाङ्गानि प्राणायामान् वाऽनुशीलयन्ति।

परन्तु अत्र एका जिज्ञासा जायते, तत्तु मठिका कीदृशी? तदुच्यते – अल्पप्रतीहारान्विता रन्ध्ररहिता गर्तरहिता च भवेत्, उच्चतरं नीचतमञ्च आयतनसंयुक्ता न भवितव्या, सम्यक्तया सान्द्रगोमयाभ्यां लिप्येत। इतोऽपि स्वच्छा, मक्षिकादिभिरुत्पन्नबाधारहिता, बाह्यप्रदेशे वेदिकूपरुचिरप्राकारसंवेष्टिता च स्यात्। एवंविधमठिकायामवस्थाय निश्चिन्तभावेन निश्चलभावेन च गुरूपदिष्टमार्गपूर्वकं योगोऽभ्यसितव्यः।

**( ख ) कालनिर्णयः -** प्राणायामसाधनार्थमुपयुक्तस्थाननिर्णयानन्तरं कालनिर्णय-

प्रसङ्गे महर्षिघेरण्डेन भण्यते तदीयघेरण्डसंहितायाम् –

**वसन्ते शरदि प्रोक्तं योगारम्भं समाचरेत्।**
**तथा योगी भवेत्सिद्धो रोगान्मुक्तो भवेद् ध्रुवम्॥**[28]

वसन्त–ऋतौ शरदृतौ च योगसाधना प्राणायामसाधना वा प्रारब्धव्या। अत्र चैत्रवैशाख-मासद्वयं 'वसन्तर्तु' इति पदस्याभिप्रायः, पुनश्च 'शरदृतु' इति पदेनाऽऽश्विन-कार्त्तिकमासद्वयं स्वीकृतम्। अतो मासचतुष्टयं तथा च ऋतुद्वयं समुचितसमयः। यतो हि कालोऽयं मनसे शरीराय चाऽनुकूलजनकः, नातिशीतलः, नात्युष्णश्च। पुनश्च कालेऽस्मिन् अधिकवेगयुक्तवायुः, वज्रपातः, वृष्टिः, वर्षा च नैव परिलक्ष्यन्ते। इतोऽपि साधकाः उपतापोज्झिताः भवन्ति, सिद्धिमप्याप्नुवन्ति।

**( ग ) भोजननिर्णयः –** यौगिकपरम्परायामाहारोऽत्यधिकमहत्त्वपूर्णः। आहारान् न केवलं भुञ्ज्यात्, अपि तु योगसाधनार्थम् अप्रयोजनीयाहारान् परित्यजेयुः। अतो विहितो निषिद्धश्च द्विधा आहारः प्रोक्तः हठरत्नावलीकारेण।

**विहिताहारः –** गोधूमः, शाल्यन्नम्, यवः, षष्टिकान्नम्, क्षीरम्, आज्यं घृतं वा, मण्डः एरण्डवृक्षो वा, नवनीतं वा, सिता शर्करा वा, मधु, शुण्ठी, पटोलः, फलम्, पञ्चशाकम्, मुद्रादिदिव्यमुदकञ्चेति योगसाधकानां पक्षे विहिताहाराः भोजनयोग्याहाराः वा। तथा चोक्तं हठरत्नावलीकारेण –

**गोधूमशालियवषष्टिकशोभनान्नं क्षीराज्यमण्डनवनीतसितामधूनि।**
**शुण्ठीपटोलफलपत्रजपञ्चशाकं मुद्रादिदिव्यमुदकं च यमीन्द्रपथ्यम्॥**[29]

**निषिद्धाहारः –** कटु–अम्ल–तीक्ष्णरसयुक्तानि द्रव्याणि, हरितपत्रसंयुक्तशाकानि च वर्जनीयानि। पुनश्च सौवीरतैलम्, तिलः, मत्स्यः, मांसम्, दधि, तक्रम्, कुलुद्धः, पिण्याकः, हिंगुः, लशुनः, सर्षपः, मद्यञ्चेति आहारान् परित्यजेयुः।

**कट्वम्लतीक्ष्णलवणोष्णहरीतशाकं सौवीरतैलतिलसर्षपमत्स्यमद्यम्।**
**अजादिमांसदधितक्रकुलत्तकोद्रपिण्याकहिङ्गुलशुनाद्यमपथ्यमाहुः॥**[30]

आहारमधिकृत्य इतोऽपि कश्चित् नियमो दरीदृश्यते, तद्यथा श्रेष्ठं सुमधुरं स्निग्धं गव्यं धातुप्रपोषणयोग्यं मनोऽभिलाषितञ्चेति आहारान् चतुर्थांशविवर्जितपूर्वकं भुञ्ज्यात्।

**( घ ) नाडीशुद्धिः -** प्राणायामस्याऽनुष्ठानात् प्राग् नाडीशुद्धिरवश्यमेव कर्तव्या। प्राङ्मुखपूर्वकम् उदङ्मुखपूर्वकञ्च कृशासने मृगासने व्याघ्रासने कम्बलासने वा उपविश्य नाडीशुद्धिप्रक्रिया सम्पूरयितव्या। प्रसङ्गेऽस्मिन् महर्षिघेरण्डेनोच्यते तदीयघेरण्डसंहितायाम्–

**कुशासने मृगाजिने व्याघ्राजिने च कम्बले।**
**स्थूलासने समासीनः प्राङ्मुखो वाऽप्युदङ्मुखः।**
**नाडीशुद्धिं समासाद्य प्राणायामं समभ्यसेत्।।**[31]

**उपसहारः**

साम्प्रतं विज्ञानस्य चिकित्सापद्धतेश्च भृशमुन्नतिर्दरीदृश्यते, तत्सत्त्वेऽपि नार्वाचीनकालत्वात् अर्वाचीनकाले रोगोपक्रमोऽधिकोऽवलोक्यते। पुराकाले मनुजैः प्रत्यहं योगाङ्गैः शरीरशुश्रूषा सम्पादिताऽसीत्, कारणादस्मात् रोगोपक्रमो लेशमात्रमिति बभूव। आधुनिकविज्ञानयुगे चिकित्सापद्धतेरुन्नतिरभिवर्धते चेदपि शरीरपरिचर्यार्थं प्राचीनपद्धतियोगाङ्गानामनुष्ठानं परिपालनं वाऽवश्यमेव कर्तव्यमित्यभिप्रायः, यतो हि रोगोपक्रमः क्रमशः क्षीयते तथा च रोगाः दोषाः वा सम्पूर्णतया विनश्यन्ते।

योगाङ्गेषु प्राणायामाभ्यासेन तथा च प्राणायामक्रियया शरीरशुश्रूषा नार्वाचीनकालत्वात् प्रचलिताऽस्ति। प्राणायामानुष्ठानेन न केवलं श्वासप्रश्वासयोर्विस्तारो निग्रहो नियन्त्रणञ्चेत्यादयो भवन्ति, अपि तु शरीरस्थदोषाः रोगाः वा, मानसिकोपतापाः मरणत्रासाश्च विनश्यन्ते। पुनश्च मनस्स्थिरपदं प्राप्यते, पाचनशक्तिरभिवर्धते, नाडी शुध्यते, वृद्धावस्था नायाति, कुण्डलिनी जागर्यते च। तथा च प्रपञ्चितमेवम्–

**विधिवत् प्राणसंयामैः नाडीचक्रे विशोधिते।**
**सुषुम्नावदनं भित्वा सुखाद्विशति मारुतः।।**[32]

अतः कलितार्किकचूडामणिश्रीनिवासभट्टकृते 'हठरत्नावली' इति ग्रन्थे उपस्थापितप्राणायामाः सविधि अनुष्ठातव्याः इति मे अभिप्रायः।

*

## सन्दर्भाः


1. महाभारतम्, शान्तिपर्व, 129.61
2. हठयोगप्रदीपिका 1.10
3. हठरत्नावली 1.22
4. हठरत्नावली 1.1

5. योगसूत्रम् 2.49
6. तेजबिन्दूपनिषद् 1.31
7. शाण्डिल्योपनिषद् 6.1
8. योगसूत्रव्यासभाष्यम् 2.50
9. हठरत्नावली 2.7
10. हठरत्नावली 2.10-11
11. हठरत्नावली 2.11-12
12. हठरत्नावली 2.13-14
13. हठरत्नावली 2.14-15
14. हठरत्नावली 2.16
15. हठरत्नावली 2.17-18
16. हठरत्नावली 2.19
17. हठरत्नावली 2.20
18. हठरत्नावली 2.21
19. हठरत्नावली 2.22-24
20. हठरत्नावली 2.25
21. हठरत्नावली 2.26
22. हठरत्नावली 2.27
23. हठरत्नावली 2.28
24. हठरत्नावली 2.29-30
25. हठरत्नावली 2.31
26. हठरत्नावली 5.2
27. हठरत्नावली 1.66
28. घेरण्डसंहिता 5.9
29. हठरत्नावली 1.71
30. हठरत्नावली 1.72
31. घेरण्डसंहिता 5.32
32. हठरत्नावली 2.2

*

# संस्कृतानूदितस्य वार्तागृहनाटकस्य समीक्षात्मकमध्ययनम्

**अनन्यासरकारः**

**०. उपोद्घातः**

जानीमो वयं यत् सर्वजनानुरञ्जकम् अखिलचेतःप्रसादकं भवति नाट्यसाहित्यम्। संस्कृतभाषया भवतु, भवतु अथवा प्रान्तीयभाषया तत्तु दर्शकानां मनसि आनन्दं सृजति। यथोक्तं पुरातनेन नाट्याचार्येण मुनिना भरतेन–

**दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।**
**विश्रान्तिजननं काले नाट्यमेतद्भविष्यति॥**
**धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।**
**लोकोपदेशजननं नाट्यमेतद्भविष्यति॥**
**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥**[1]

अधुना मौलिकसंस्कृतसाहित्यस्य समान्तरालेन अनूदितसंस्कृतसाहित्यस्यापि विकासः जातः। प्रान्तीयभाषानुगुणं बहुधा विभक्तम् अनूदितसंस्कृतसाहित्यमपि। महाकवयस्ते अन्यस्य काव्यानि यथा सुष्ठुतया अनूद्य लोकलोचनगोचरतां प्रापितवन्तः, तथैव कथाः नाटकानि च। संस्कृते यथा काव्यानि अनूदितानि, तथा नाटकानि, यद्यपि संस्कृतरङ्गमञ्चस्याभावात् नानूदितानि किन्तु कालिदाससमारोहे, केन्द्रीयसंस्कृतविश्वविद्यालयस्य नाट्यमहोत्सवेषु च एषु दिनेषु अनूदितानि नाटकान्यपि प्रदर्शितानि भवन्ति। अतीतेऽपि प्राच्यवाणीसंस्थायाः, संस्कृतसाहित्यपरिषदः नटाः यथा वङ्गेषु कलिकातायां नटितवन्तः, आकाशावाणीतः स्वनाटकानि, अनूदितनाटकानि (वार्तागृहम्) प्रसारितवन्तः, तथैव पण्डिचेर्याश्रमे, माड्रासरामकृष्णमठे, कालिदाससमारोहे, अन्येषु स्थानीयरङ्गमञ्चेषु च स्वीयनाटकानि, अनूदितनाटकानि च प्रदर्शितवन्तः। अनुवादकादिभिः (डॉ. ध्यानेशनारायणचक्रवर्ती) 'वार्तागृहं' मञ्चेऽपि प्रयुक्तं

वर्तते, आकाशवाणीकेन्द्रादपीदं प्रसारितं वर्तते। तथैव शेक्सपियरस्य सर्वाणि नाटकानि, रवीन्द्रनाथस्य नाटकानि, विजयपर्व–अरण्यशस्य–आषाढस्यैको दिवस–कपालकुण्डला–ध्रुवस्वामिनी–उन्मत्तकीचक–मांग–जालियांवालाबागकाण्ड–सङ्गीतसौभद्रादीनि विशालकायानि रूपकाणि संस्कृते अनूदितानि इत्यस्माकं सन्तोषः। अत्रापि वङ्गीयसाहित्यस्य प्राधान्यं दृश्यते विश्वकवेः रवीन्द्रनाथस्य प्रभावात्।

### 1. मूलनाट्यकारः

वार्तागृहस्य मूलनाट्यकारस्य रवीन्द्रनाथस्य बहुविश्रुतं नाम विश्वेऽस्मिन्। तस्य काव्यनाटकसङ्गीतानां मधुररसधाराभिः सहृदया विमलानन्दमनुभवन्ति। बाल्यकालादेव रवीन्द्रनाथस्य कविप्रतिभा उन्मीलिता। तेन प्रणीतानां कवितानां प्रथमपुस्तकं 'सन्ध्यासङ्गीत' इति नाम्ना प्रकाशितमभवत्। ततस्तेन 'प्रभातसङ्गीत', 'कडि ओ कोमल', 'मानसी', 'सोनार तरी', 'चित्रा', 'चैताली', 'नैवेद्य', 'खेया' इत्यादीनि काव्यानि विरचितानि। अनन्तरं कविः 'गीताञ्जलि' इत्याख्यं काव्यं विरचय्य 'नोवेल' इति पुरस्कारप्राप्त्यनन्तरं तेन 'वलाका', 'पूरवी', 'महुया' प्रभृतीनि काव्यानि, 'डाकघर', 'विसर्जन', 'वाल्मीकिप्रतिभा' प्रभृतीनि नाटकानि, 'गोरा', 'नौकाडुवि' प्रभृतीनि कथाकाव्यानि च विरचितान्यासन्। तेन शतशः सङ्गीतानि अपि रचितानि। कवीन्द्रस्य रचनाः प्रायः बङ्गभाषानिबद्धा इत्यतः अन्येषां कृते तु अनुवादः शरणम्। रवीन्द्रनाथस्य काव्यजातमद्यत्वे बह्वीभिर्भाषाभिरनूदितं वर्तते। परन्तु संस्कृतेन रवीन्द्रसाहित्यस्यानुवादे अस्ति किञ्चिद्वैशिष्ट्यम्। संस्कृतज्ञस्य रवीन्द्रनाथस्य काव्यकृतिषु सर्वत्रैव उपनिषद्भावना प्रकटिता वर्तते। स संस्कृतवाङ्मयेन नितरां प्रेरित आसीत्। तस्य रचनासु संस्कृतप्रभावो लक्ष्यते। संस्कृतवाङ्मयानुप्राणितं तत्काव्यजातं संस्कृतवाचकैः सुबोध्यं स्यादित्यत्र नास्ति संशयलेशः।

### 2. रवीन्द्रनाथस्यानुवादकास्तेषामनुवादाश्च

रवीन्द्रनाथठाकुरेण रचितेषु रूपकेषु विविधप्रकारकाणि रूपकाणि सन्ति। नाटकानि, काव्यनाट्यानि, नाट्यकाव्यानि, व्यङ्ग्यनाटकानि, प्रहसनानि चात्र अन्तर्भूतानि। कदाचित् रवीन्द्रस्य विविधभावभरितानि नाटकान्यपि संस्कृतानुसर्जकानां समक्षमाह्वानानीव आदर्शरूपाणीव वा स्थितानि स्युः। यदर्थं वेङ्कटराघव–के. टि. पाण्डुरङ्गिध्यानेशनारायणचक्रवर्तिप्रभृतयः तत्र लेखनीं चालितवन्तः। विविधासु भाषासु रवीन्द्रनाथस्य कथा–कविता–नाटकादीनामनुवादो जातः। केवलं संस्कृतभाषया गीताञ्जलिमन्वववदन् नैके अनुवादकाः। तदा तदा रवीन्द्ररूपकाणां कथानामपि संस्कृतानुवादो जात एव। संस्कृते अनूदितानां रवीन्द्रसाहित्यानां एका सूची अधः प्रस्तूयते–

* अमरेन्द्रमोहनतर्कतीर्थः – गीताञ्जलिः, 1929 (प्र.सं.), पुनः 2010।
* कामिनीकुमारअधिकारी – गीताञ्जलिसंस्कृतम्, 1961।
* श्रीकालीपदतर्काचार्यः – गीताञ्जलिप्रतिच्छाया, 1966।
* पुल्लेलश्रीरामचन्द्रः – गीताञ्जलिः, 1962।
* रामप्रसन्नभट्टाचार्यः – रवीन्द्रकाव्यकुसुमाञ्जलिः, 2001।
* लक्ष्मीकान्तपञ्चतीर्थः – निर्झरशीकरम्, 2000।
* दीपकघोषः – कवीन्द्ररवीनम्, 1995।
* श्रीरामदवे – गीताञ्जलिः, 2007।
* के. रामकृष्णवारियरः – गीताञ्जलिः, 2008।
* गिरिधारिशर्मा नवरत्नः-गीताञ्जलिः,राजस्थानम्। महावीरप्रसादशर्मा-गीताञ्जलिः,2000
* एन्. गोपालपिल्ले – गीताञ्जलिः, 1969।
* सूर्यनारायणराव : – गीताञ्जलिगानामृतम्, 1996।
* गौरीदत्तशर्मशास्त्री – गीताञ्जलिः।
* श्रीफटिकलालदासः – रवीन्द्रकाव्यकुसुमाञ्जलिः, 1975।
* इन्द्रमोहनचक्रवर्ती – संस्कृतप्रतिभा, 7 गीतानि, 1966।
* कृष्णनम्पूतिरि – संस्कृतप्रतिभा, 4 गीतानि, 1966।
* गणेशलक्ष्मण अमलादिः – संस्कृतप्रतिभा, 13 गीतानि, 1966।
* चन्द्रशेखररामचन्द्रताम्बे – संस्कृतप्रतिभा, 2 गीते, 1966।
* दुर्गादासगोस्वामी – संस्कृतप्रतिभा, 6 गीतानि, 1966।
* कोलव्यासरायशास्त्री – संस्कृतप्रतिभा, 1 गीतत्, 1966।
* शैलेन्द्रनाथनमौलिकः – संस्कृतप्रतिभा, 4 गीतानि, 1966।
* उडालिसुब्बरायशास्त्री – संस्कृतप्रतिभा, 12 गीतानि, 1966।
* गिरिजाप्रसन्नलाहिडी – सं.सा.प.प.,[2] 9389।
* विश्वेश्वरविद्याभूषणकाव्यतीर्थः – संस्कृतरवीनम्, 1 गीतम्, 1966।
* विश्वनाथभट्टाचार्यः – सागरिका, 1 गानम्।
* टि. के. पाण्डुरङ्गिः – रवीन्द्ररूपकाणि।

* ध्यानेशनारायणचक्रवर्त्ती – वार्तागृहम्, मुक्तधारा, रक्तकरवी।
* तन्मयकुमारभट्टाचार्यः–षट्कथाः, कवीन्द्रकथाकल्लोलिनी, प्रत्नः समयः, 2012।
* नारायणदाशः – 11 कथाः, कवीन्द्रकथाकल्लोलिनी, लिपिका, 2013।
* राकेशदाशः – पञ्चदशकथाः, कवीन्द्रकथाकल्लोलिनी, 2011।
* दुर्गा पारखी – काबुलीवाला, 2010।
* बनमालिबिश्वालः – पत्रालयः, 2012।
* वेङ्कटराघवः – नटीपूजा, वाल्मीकिप्रतिभा, 1966।
* श्रीचक्रधरआचार्यः – कर्णकुन्तीसंवादः, सं.सा.प.प.।
* श्रीरामधनशास्त्री – आवेदनम्।
* क्षितीशचन्द्रचट्टोपाध्यायः – अध्यापकः, मञ्जूषा, 1956।
* श्रीविमलकृष्णमतिलालः – रथरज्जुः, सं.सा.प.प., 1962।
* रमारञ्जनमुखोपाध्यायः – काव्यम्, सं.सा.प.प. (रवीन्द्रसङ्ख्या), 1961।
* भवानीप्रसादभट्टाचार्यः – मनुष्यस्य धर्मः, सत्यानन्दम्, 2008–11।
* सत्यनारायणचक्रवर्ती – प्राचीनसाहित्ये, सं.सा.प.प. (रवीन्द्रसङ्ख्या)।
* निखिलेशचक्रवर्ती – शताधिकगानानि, 2001 तः।
* सीतानाथाचार्यः – केवला ते वाणी, दयया मे जीवनं..., अद्य तेऽभिसारः।
* इलाघोषः – घट्टस्य वार्ता, दूर्वा।

**3. अनुसर्जकः**

वाङ्लादेशस्य चित्तगाँजनपदात् समागते चक्रवर्त्तिपरिवारे उत्तरचव्विशपरगणायां दत्तपुकुरे ऋषिधाम्नि ध्यानेशनारायणचक्रवर्त्ती पण्डितविश्वेश्वरविद्याभूषणस्य पुत्ररूपेण 1930 ईशवीयसंवत्सरे अक्टूबरमासस्य अष्टादशदिनाङ्के जातः।[3] राष्ट्रपतिपुरस्कारेण पुरस्कृतोऽयं प्राच्यविद्याविद्वान् रवीन्द्रभारतीविश्वविद्यालये अध्यापकरूपेण कार्यमकरोत्। तेन सह संस्कृतस्य प्रचुरप्रचाराय अयं बहुविधकार्याणि अकरोत्। तस्य मौलिककृतिभिः सह अनूदितकृतयः सम्पादिता ग्रन्थाश्चापि प्रसिद्धिं गताः सन्ति।

मौलिकम् – Ancient Indian Political Thoughts.

अनुवादाः– वार्तागृहम्, मुक्तधारा, रक्तकरवी, प्राच्यपाश्चात्यम्।

सम्पादिताः– गीतारहस्यम् (तिलकस्य), अष्टभागैः कालिदासकृतयः।

**4. वार्तागृहम्**

विश्वकवेः रवीन्द्रनाथस्य 'डाकघर' इति रूपकं 1318 बङ्गाब्दे (1912 ईशवीयसंवत्सरे) 'अचलायतन' इति रूपकात्परं पुस्तकाकारेण प्रकाशितं परन्तु ततः पूर्वं लिखितम्। डब्ल्यू. अनड्यू. रविनसनस्य तथा कृष्णदत्तस्य सम्मतं यदिदं रूपकं रवीन्द्रनाथस्य विश्वप्रसिद्धरूपकेषु अन्यतमं वर्तते। विश्वकविना इदं दिनचतुष्टयेन रचितमासीत्। डब्ल्यू. वि. इयेट् प्रथमतः अस्य आङ्ग्लानुवादं प्रस्तुतवान्। अस्य रूपकस्य मुखबन्धमप्येकदा स लिखितवान्। जौन रमन झिमेंझमहोदयः स्पानिस् भाषया, आण्ड्रे गीडमहोदयः फ्रेञ्चभाषया रूपकमिदमन्ववदताम्। नाजिभिः प्यारिस–अधिकारस्य पूर्वसन्ध्यायामस्य फ्रेञ्चानुवादः वेतारमाध्यमेन प्रसारितः। रामचन्द्र–प्रभासचन्द्र नन्दिना हिन्द्यां डाकघरस्यानुवादो विहितः, यः प्रयागस्थ–इण्डियनप्रेसतः 1917 तमे वर्षे प्रकाशितः।

**5. संस्कृतानुवादः**

'डाकघर' इत्यस्य संस्कृतानुवादं कृतवान् डॉ. ध्यानेशनारायणचक्रवर्ती। अयमनुवादस्तस्य केन्द्रसाहित्याकादम्या 1966 ईशवीयाब्दे प्रकाशितायाः संस्कृतप्रतिभायाः षष्ठे अङ्के, 'संस्कृतरवीन्द्रम्' इति ग्रन्थे च वेङ्कटराघववर्येण सङ्कलितो वर्तते। अनन्तरं तेनानूदितस्य संस्कृतसाहित्यपरिषत्पत्रिकायां (44–45 वर्षयोः) प्रकाशितस्य, तथा संस्कृतपुस्तकभण्डारेण पुस्तकाकारेण प्रकाशितस्य रवीन्द्रनाथस्य अपरनाटकस्य 'मुक्तधारा' इत्यस्य संस्कृतानुवादेन सह पुस्तकाकारेण 'मुक्तधारावार्तागृहम्' शीर्षकेण पुनः प्रकाशितं वर्तते 1988 ईशवीयसंवत्सरे कलिकातातः रवीन्द्रभारतीविश्वविद्यालयेन। अनुवादकादिभिः इदं मञ्चेऽपि प्रयुक्तं वर्तते, आकाशवाणीकेन्द्रादपीदं प्रसारितं वर्तते। रवीन्द्रनाथस्य मूलमनुसरतापि अनुवादकेन क्वचिदस्य संस्कृतमयत्वं सम्पादितम्। अस्मिन् ग्रन्थे विविधशास्त्रपारङ्गतानां शुभाशंसनानि सन्ति। प्राक्कथने अनुवादको रवीन्द्रनाथस्य संस्कृतप्रीतिं स्फारीकृत्य कामं विशदयति रवीन्द्रमानसं, प्रवर्तयति चात्मानं संस्कृतानुवादे, तदर्थं संस्कृतभाषामेव योग्यतमां मन्यमानः। यथा– **'अतः, संस्कृतभाषायाः साहित्यस्य च भावसम्पद्भिः सुसमृद्धं यद् बङ्गभाषामयं रवीन्द्रसाहित्यं तस्यानुवादविषये संस्कृतभाषैव योग्यतमा भावादर्शस्य ऐक्यात्, रूपकल्पनस्य च सादृश्यात् साहित्यस्यास्य मौलिकभावसम्पदः संस्कृतेनैव सुरक्षिता भविष्यन्ति। अतः खलु रवीन्द्रनाटकस्य संस्कृतानुवादे मे प्रयासः।'**[4] इति।

**6. नान्दी प्रस्तावना च**

'संस्कृतरवीन्द्रम्' इति ग्रन्थे 202–227 पुटेषु, 'मुक्तधारावार्तागृहम्' इति ग्रन्थे

85–114 पुटेषु व्याप्तेऽस्मिन् नाटके अनुवादकः प्रस्तावनां संयोज्य संस्कृतच्छायां कल्पितवान्। पुनश्च इदमपि स्मरणीयं यत् पुनः प्रकाशिते परवर्तिनि संस्करणे स नान्दीश्लोकान् परिवर्तितवान्, क्वचित् संशोधनमपि कृतवान्। प्रस्तावना यथा–

**कल्याणीं शुभ्रहासां ललितरसमयीं मौलिबद्धेन्दुलेखां**
**मुक्तास्त्रङ्मण्डिताङ्गीं सरसिजनिलयां काशकुन्दाब्जकान्तिम्।**
**हंसस्थामम्बुजाक्षीं शशधरवदनां शुद्धसत्त्वप्रकाशां**
**वन्दे श्रीत्रय्यविद्यां सुरमनुजनुतां चिन्मयीं ध्यानगम्याम्॥**
**वाग्देव्याः पादलग्ने सितकमलवने सञ्चरन् पुण्यकीर्तिर्-**
**वीणारावैः सुगीतैः कलरवमुखरं पूरयन् दिग्दिगन्तम्।**
**ज्योतिर्दीप्तो वरेण्यः शुभजयतिलकैर्मण्डितो विश्ववन्द्यः**
**सोऽयं जीयाच्चिरं नो निखिलभुवनमणिः श्रीरवीन्द्रः कवीन्द्रः॥**

**( नान्द्यन्ते )**

**सूत्रधारः –** अहो, अद्य खलु कविसार्वभौमस्य रवीन्द्रनाथस्य जन्मशत-वार्षिकीमुपलक्ष्य तस्य 'डाकघर' इति नाटकस्य संस्कृतानुकल्पनं वार्तागृहमस्माभिरभिनीयते।

**नटी –** आर्य, कथं संस्कृतानुकल्पनं, केन वा तदनूदितम्?

**सूत्रधारः –** या खलु शाश्वती भारतीया संस्कृतिः कविवर्येण वन्दिता नन्दिता समाहृता च, तस्याश्च चिरन्तनधात्रीयं सुरवाणी संस्कृतभाषा। अतः संस्कृतानुवादोऽस्माभि-रभिनीयते।

**तत् काव्यं मधुनिर्झरोपममिदं विद्वज्जनानन्ददं**
**चित्वा वै करुणारसैककथिकां भावोच्छला मर्मणः।**
**चक्रे संस्कृतभाषयानुरचितं नाट्यानुवादं कवेः**
**श्रीविश्वेश्वरशर्मदीततनयो ध्यानेशनारायणः॥** इति प्रस्तावना।

**7. नामकरणम्**

अस्य नाटकस्य नामकरणं गूढतात्पर्यम् आवहति। वार्तागृहं भवति विश्वजगत्। वार्ता पत्रं वा भवति तस्य सौन्दर्यमयी वार्ता। ऋतूनां परिवर्तनमत्र पत्रवाहकः अस्ति। अत्र वार्तावाहकानां नामकरणात् तत् स्पष्टं भवति– बादलः, शरत् इत्यादि। नाटके अमलः मानवात्मनः प्रतीकम्। सदा मुक्तास्वरूपः मानवात्मा सामयिकभावेन बद्धः भवतु नाम सदा

मुक्तेः आनन्दमिच्छति, विश्वस्मिन् विश्वे क्रीडनेन परिभ्रमणम् इच्छति। नवनवदेशान् द्रष्टुमिच्छति। अर्थात् मानवात्मा विश्वात्मना मेलितुमिच्छति।

तथापि अत्र डाकघरविषये रवीन्द्रनाथः यत् वदति तत् तस्य 'खेया' काव्यस्य रहस्यमयत्वम्, गीताञ्जलेःआत्म निवेदनं च समग्रीकरोति। नाटकमिदं युगचेतकं वर्तते। तात्कालिकी देशपरिस्थितिः, राजनीतेः कुफलं च प्रभावयति नाट्यकारम्। सि.एफ्.एडड्डुजं प्रति लिखिते पत्रे स वदति– अमलस्य देशस्य अस्याम् अवस्थायां वार्तागृहनाटकस्य अन्यः कोऽपि अर्थः किं भवतः स्फुरति वा? भारतवर्षस्य मुक्तिवाणी अपि महाराजस्य दूतहस्तेन आगच्छेत्– ब्रिटिशपार्लामेण्टतः नहि। अयं देशः यदा जागृयात् , कापि भित्तिः तं रोद्धुं न शक्नुयात्, महाराजस्य पत्रं किम् अद्यावधिः न हस्तगतं तस्य? (संस्कृतानुवादः)।

## 8. वस्तुयोजना

'डाकघर' इति प्रधानदृश्यत्रयविशिष्टम् एकाङ्कं रूपकं वर्तते, यत्र कथानायकस्य लघुबालकस्य अमलगुप्तस्य कथा वर्णिता। अमलः केनापि व्याधिना पीडितो बहिर्गमनार्थं नानुमतः, गृहाभ्यन्तरे एव वर्तते। परन्तु बाल्यचापल्यं तं भृशं पीडयति। बहिरङ्गे स्थितैः सह आलपितुं, बहिर्जगत् द्रष्टुं तस्य इच्छा वरीवर्ति। तस्य पालितपित्रा व्यवस्थापिते प्रकोष्ठे वन्दी इव स वातायनसमीपे सर्वदा उपविशति, बहिरङ्गं पश्यति च। क्रमशः तेन पथा गच्छद्भिः जनैः (दधिविक्रेतृ-प्रहरी-सुधा-पितामहादिभिः) सह तस्य मैत्री भवति। पार्श्वतः निर्मीयमाणं पत्रालयं दृष्ट्वा तस्य इच्छा भवति, सोऽपि पत्रमेकं प्राप्नुयाद् राज्ञः समीपात्, नोचेत् स राज्ञः पत्रवाहकः भवेदिति। अन्ततो मण्डलपतिस्तं राज्ञः पत्रं प्रदाय वदति, अत्र लिखितमस्ति राज्ञः चिकित्सकः तव चिकित्सार्थम् आगमिष्यतीति। यदा वस्तुतः चिकित्सकः आगतवान्, सुधा च पुष्पाणि आनीतवती, तदा स सुप्तः आसीत्।

## 9. संवादशैली

नाटके षडङ्गानि भवन्ति। तन्मध्ये संलापः अन्यतममङ्गम्। यतोहि संलाप एव सम्पूर्णस्य नाट्यवृत्तस्य भावस्य (Thought) च वहनं कृत्वा तेन सह चरित्रस्य अन्तर्जगता तस्य द्वन्द्वं संघातं च सर्वं परिप्रकाशयति संलापमाध्यमेन एव। तदर्थं संलापः नाटकस्य एकमपरिहार्यमङ्गम्। अत्र 'डाकघर' इति नाटकस्य संलापाः आलोचनीयाः सन्ति।

रूपकेऽस्मिन् क्वचित् क्वचित् संलापाः कवित्वपूर्णधारया प्रवहन्ति। क्वचित् व्यञ्जनाधर्मिणः। कुत्रचित् चरित्रानुगाः संलापाः सन्ति। प्रतिचरित्रं भिन्नं भिन्नं वैशिष्ट्यं स्वीकरोति। संलापमाध्यमेन प्रतिचरित्रं स्वीयां सत्तां प्रकाशयति। अत्र काव्यधर्मिसंलापैः सह गद्यसंलापा अपि सन्ति। अस्मिन् रूपके तु संलापाः चित्रकल्परूपाः चित्रधर्मिणो

वा सन्ति। एते कथायाः चित्रं चित्रयन्ति रवीन्द्रनाटकेषु। एतान् विषयान् वयम् उदाहरण-पुरस्सरम् आलोचयामः।

अमलस्य कथा अस्मिन् रूपके काव्यरूपं धत्ते। अमलः यदा दधिविक्रेतारं वदति–

**अमलः–** नहि, नहि, नाहं कदापि पण्डितो भविष्यामि। युष्माकं लोहितरागरञ्जितं पन्थानमभितः प्राचीनवटच्छायासु या खलु घोषपल्ली तत्पल्लीतो दधि समानीय दूराद् दूरान्तरे ग्रामाद् ग्रामान्तरे च दधि विक्रीणानः परिभ्रमिष्यामि। येन कण्ठेन त्वम् उच्चारयसि तत्स्वरालापनं मां शिक्षय–दधि–दधि उत्तमं दधीति।

एतत्सर्वं तु अलङ्कृतं चमत्कृतं काव्यमिव भाति। वार्तागृहनाटकस्य नैके संलापाः व्यञ्जनाधर्मिणः सन्ति। विशेषतः महाराजस्य पत्रागमनात् परम् अमलस्य निद्रां यावत्। आहोस्वित् पितामहस्य संलापेषु सैव धारा दृक्पथमारोहति। उदाहरणार्थं यथा–

**राजवैद्यः–** किमिदम्? चतुर्दिक्षु सर्वमेव रुद्धम्। मोचय। मोचय। यानि यानि द्वाराणि गवाक्षाणि च विद्यन्ते तानि सर्वाणि उन्मोचय। (अमलस्य गात्रं हस्तेन परामृश्य) वत्स! कीदृशमनुभूयते?

**अमलः–** अत्युत्तमम्, अत्युत्तमम्, भिषङ्महोदय ! अधुना नास्ति मे कापि पीडा, नास्ति कापि व्यथा। अहो सर्वम् उन्मुक्तम्– सर्वानेव तारागणान् पश्यामि। तमसः परस्तात् शोभमाना निखिला नक्षत्रमण्डली मया दृश्यते। अत्र राजकविराजः सकलं बन्धनम् उन्मोचयितुं वदति, तत्तु विश्वेश्वरेण मेलनार्थम्। समानभागेन बद्धं जीवनं मुक्त्यर्थं तृषितमस्ति। अत्र मुक्तेः व्यञ्जना ध्वन्यते। सर्वमपि बन्धनम् अपाकृत्य अमलः सत्यमेव निर्मलः, स्वच्छः, शुभ्रः भवति। तत्त्वं पूषन् अपावृणु सत्यधर्माय दृष्टये इति वदति ऋषिः ईशावास्योपनिषदि। तस्य प्रभावः अत्र द्रष्टुं शक्यः। तदा एव परमात्मना सह मेलनं स्यात्, यदा सर्वमपि बन्धनमपगतं स्यात्।

अधुना किञ्चित् आलोचयामः गद्यसंलापानां विषये। मण्डलपतेः, प्रहरिणः, दधिविक्रेतुः माधवदत्तस्य वा संलापाः मूलतः गद्यधर्मिणः सन्ति। तत्र कापि व्यञ्जना तत्त्वव्याख्या वा नास्त्येव। एतेषु संलापेषु नित्यप्रतिदिनमुच्चारिताः साधारणसंलापाः सन्ति। तन्मध्ये अपि मण्डलपतिः स्ववैशिष्ट्यं विशेषयति। अन्यानि चरित्राणि अपि स्वभावान् प्रकाशयन्ति साधरणसंलापैः एव। यथा दधिविक्रेतुः संलापेषु दृश्यते व्यग्रता, कोमलहृदयता, मुग्धता च। यथा–

**दधिविक्रेता-** कीदृशः किशोरस्त्वम्। यदि न क्रेष्यसि ? तदा कथं मां विलम्बयसि?

**दधिविक्रेता–** न, न, न, न, नहि– अलमर्थेन। यदि त्वं मम दधि पिबसि, तदाहमतीव आनन्दितो भविष्यामि।

**दधिविक्रेता–** नहि, नहि। न मे विलम्बो जातः न वा क्षतिः। दधिविक्रये कीदृशं सौख्यं, तन्मया त्वत्सकाशादधिगतम्।

दधिविक्रेतुः तिसृणां मानसिकावस्थानामत्र प्रतिफलनं दृश्यते। तेन तस्य सामग्रिकभावाः परिस्फुरन्ति। तस्य सम्बन्धे विशिष्टा धारणा विनिर्मिता। अन्यचिरित्राणां विषये अपि एषा कथा सत्या अस्ति। कविराजस्य, राजकविराजस्य, मण्डलपतेः, प्रहरिणः, दधिविक्रेतुः माधवदत्तस्य वा संलापाः मूलतः गद्यधर्मिणः सन्ति। तत्र कापि व्यञ्जना वा तत्त्वव्याख्या वा नास्त्येव। आत्मानं ते सरलसंवादैः प्रकाशयन्ति। यथा सुधा। सा काचित् मधुरभाषिणी कन्या। तस्याः संलापाः तस्याः चारित्रिकवैशिष्ट्यं प्रकाशयन्ति। सा निर्झरिणीव गतिमयी, चञ्चलप्राणा च वर्तते। अमलेन सह सुधायाः कथोपकथने तदेव प्रतिविम्बितमस्ति।

सर्वशेषे एतदपि विचारणीयं वर्तते यत् वार्तागृहस्य संलापाः चित्रधर्मिणः एव। अत्र वयं पितामहस्य संलापान् उदाहरणत्वेन स्वीकर्तुं पारयामः। क्रौञ्चद्वीपस्य वर्णनामाध्यमेन चित्रधर्मितायाः तथा कथाधर्मितायाः परिचयोऽपि लभ्यते।

संलापाः नाटके साधारणतया यत् दायित्वं पालयन्ति, रवीन्द्रनाट्यसंलापाः तदतिरिक्तं दायित्वं स्वीकुर्वन्ति। तदर्थं रवीन्द्रनाथः तस्य नाटकं विश्वनाट्येन परिवर्तयितुं समर्थः जातः। तदर्थं संलापाः किमपि गुरुदायित्वं नयन्तीति कथनं शोभते। प्रथागतनाट्यधारायाः बहिरागत्य रवीन्द्रनाथो नाटकं बङ्गीयपरिसरात् मोचयित्वा विश्वप्रान्तरे अस्थापयत्। तदर्थं तस्य नाट्यसंलापाः प्रथागतनाट्यसंलापेभ्यः अतिरिच्यन्ते इति सर्वजनविदितं सत्यं प्रमाणितं वर्तते।

रवीन्द्रनाथस्य एकं गानं वर्तते– 'कोथाओ आमार हारिये याओयार ने माना मने मने' अथवा 'आमि चञ्चल हे, आमि सुदूरेर पियासी' इति। 'डाकघर' इति नाटके अयं सुदूरस्य सङ्केतः, अज्ञातस्य इङ्गितं, गीतिमाधुर्येण नाट्यसौन्दर्येण वा आत्मप्रकाशं लभते। अमलं, सुधां, पितामहं, वार्ताहारकम्, अदृश्यं राजानं च केन्द्रीकृत्य एवं सुन्दरकरुणघनरहस्यं परिस्फुरितं, यत् अन्तिमक्षणं यावत् सुरक्षितं वर्तते, यत् अन्यसाङ्केतिकनाटकेषु न दृश्यते।

**10. चरित्रचित्रणम्**

**अमलः**

वार्तागृहनाटकस्य चरित्राणि प्रायशः प्रतीकरूपाणि सन्ति। अस्मिन् अमलः प्रधानचरित्रं

वर्तते। अमलस्य परिचयं प्रदाय नाट्यकारः माधवदत्तस्य मुखेन मन्त्रयति, स हि मद्भार्यायाः ग्रामसम्पर्केण भ्रातुष्पुत्रः। आशैशवान्मातृहीनश्च। किञ्च कियद्दिनेभ्यः प्राक् तातस्तस्य पञ्चत्वमुपगतः।

पितृमातृहीनम् इमं बालकं माधवदत्तः स्वगृहे स्थानं ददाति। अयम् अमलः अधुना तस्य नयनमणिः। किन्तु अमलः अस्वस्थो जातः। जीवनस्य आशा क्षीणा जाता। अधिकानि दिनानि जीवितुं सः गृहाभ्यन्तरे आबद्धभावेन स्थापनीयः। कविराजस्य अनेन विधानेन पितृष्वसृपतिः माधवदत्तः तं पूर्णतया वन्दीकृत्य इव स्थापयति, कथमपि बहिर्गन्तुं न ददाति। परन्तु अमलः लघुः बालकः, स सदा द्रष्टुम् इच्छति, भ्रमितुम् इच्छति। माधवदत्तस्य मते एवं किं वा दर्शनीयमस्ति, यदर्थमेवम् अमलः व्याकुलितो भवति। परन्तु बहिर्जगतः आकर्षणं वारं वारम् अमलम् आकर्षति। दूरपर्वतं विलङ्घ्य कुत्रापि दूरदेशे कुत्रापि चलितुं तस्य इच्छा भवति। तदर्थं स पर्वतरूपं हस्तं प्रसार्य नीलमाकाशम् आह्वयति। तदाह्वानं बहुदूरस्थः मनुष्यः अपि श्रोतुं शक्नोति। अमलस्य विश्वासः यत् पण्डिताः तदाह्वानं श्रोतुं न समर्थाः सन्ति। अमलस्य एवंविधा कथा पितृष्वसृपतिसमीपे उन्मादता प्रतीयते। अत्र अमलस्य चरित्रे सुदूरं प्रति या व्याकुलता दृश्यते सा वस्तुतः नाट्यकारस्य रवीन्द्रनाथस्य स्वकीया एव आसीत्। सा कथा रवीन्द्रनाथस्य पत्रेषु दृश्यते।

तादृशं सुदूरं प्रति आकर्षणम् तथा व्याकुलभावश्च वर्तते अमलस्य यदर्थं स कदा दधिविक्रयार्थं गन्तुम् इच्छति, कदा पत्रवितरकस्य कार्यं कर्तुम्, कदा वा द्वारं द्वारम् अटित्वा भिक्षार्थम् इच्छति। तदर्थं दधिविक्रयसमये स्वरेण उच्चैः आह्वानं शिक्षितुं तस्य असौविध्यं नास्ति। सर्वं किमपि कर्तुं स एतदर्थम् इच्छति यत् सोऽपि तादृशं देशान्तरमटितुं भ्रमितुं च शक्नोति। किशोरः बालकः अमलः सुदूरस्य आकर्षणेन एव प्रखरकल्पनाविलासी भवति। प्राकृतिकजगत् प्रति तस्य आग्रहः तथा प्रखरः यथा स दधिविक्रेतुः ग्रामे कदापि न गत्वा अपि तस्य ग्रामस्य निपुणं वर्णनं प्रस्तौति। अर्थात् बालकः अमलः सुदूरस्य आह्वानरूपेण अज्ञातस्य इङ्गितानुभूतिरूपेण प्रतीकरूपेण वा सत्यं भवति, तन्नास्ति चेत् रुग्णबालचित्तस्य प्रकाशरूपेण अमलः कश्चित् दुःखविलासी, अतिरिक्तप्रवीणः, प्राज्ञः इव प्रतीयते। तस्य भाषणमपि किञ्चित् अतिरिक्तचिन्ताभावग्रस्तं बालकस्य किशोरस्य अपेक्षया कवेः भावेन भावितम्।

नाटकस्य कथावस्तु अमलमेव केन्द्रीकृत्य आवर्तते। अन्यानि चरित्राणि तु अमलं परितः गमनागमनं कुर्वन्ति। तदर्थम् अमलः एव नाटकस्य मुख्यं चरित्रम्। नैके वदन्ति यत् अमलस्य चरित्रे रवीन्द्रनाथस्य बाल्यचापल्यं लभ्यते। गृहस्य वातायनस्य समीपे उपविश्य

एव स दिनानि यापयति स्म। अमलः तस्य बद्धगृहस्य उन्मुक्तवातायनसमीपे बहिर्जगतः सम्पर्कं साधयति स्म।

नाटके अन्ततोगत्वा अमलः निद्रां गतः। केषाञ्चन मतं यदयं मृत्योः सङ्केतो वर्तते। यद् भवतु नाम, अमलस्य चरितेन नाट्यकारः स्वस्य विश्वप्राणतां मुक्तभावनां च सम्यक् प्रतिवादितवान्। नाटकरूपम् अमलस्य आलापं नाट्यकारः विविधैः जनैः कारयित्वा तस्य दर्शकानां च विरक्तिभावं च निवारयितुं क्षमः अस्ति। अस्य चरित्रस्य अभावेन अस्य नाटकस्य एव अस्तित्वं विलुप्तं स्यात्।

**माधवदत्तः**

नाटकेऽस्मिन् प्रधानचरित्रेषु अन्यतमः वर्तते माधवदत्तः। माधवदत्तः अमलस्य आश्रयदाता, दूरसम्पर्कीयः पितृष्वसृपतिश्च वर्तते। अमलं प्रति तस्य प्रगाढा स्नेहभावना दृश्यते। सः निःसन्तानः आसीत्। तस्य पत्नी कमपि पोष्यपुत्ररूपेण ग्रहीतुं वदति। तदर्थं सः अमलं पोष्यपुत्ररूपेण स्वीकरोति। प्रथमतः यद्यपि तस्य स्नेहः नासीत्, तथापि परवर्तिकाले प्रारब्धः आसीत्। तदर्थं माधवदत्तः पत्न्याः दूरग्रामसम्पर्कीयस्य भ्रातुष्पुत्रस्य अमलस्य कृते दुर्बलः स्नेहप्रवणः भवति। तस्य गृहे अमलस्य आगमनात् परं तस्य चरित्रमपि परिवर्तते। पितामहेन सह तस्य आलापेषु एतत् परिवर्तनं नेत्रातिथ्यं गतम्। कृपणस्य माधवस्य सर्वमपि चारित्रिकं परिवर्तनम् अमलनिमित्तम् अभवत्। अमलः तस्य पोष्यपुत्रः भवतु नाम, निजसन्तानं प्रति यथा ममत्वबोधः भवति तथैव आसीत् तस्य अमलं प्रति। कथमपि ततः न्यूनं न भवति।

माधवदत्तः अमलः इव भावुकः नास्ति। वास्तवज्ञानसम्पन्नः स विषयबुद्ध्यादियुक्तः आसीत्। तदर्थं स पाठं पठित्वा पण्डितः भवत्विति अमलम् उपदिशति। स्वयं तु न अभवत्, तथा भवति चेज्जीवितुं शक्नुयादिति तस्य मन्तव्यम् आसीत्। तच्छ्रुत्वा अमलः प्रतिवदति यत् सः पण्डितः भवितुं न इच्छति। संसारे परिभ्रम्य सर्वं किमपि द्रष्टुम् इच्छति। अनेन माधवदत्तः चिन्तयति यत् अमलस्य वास्तवबुद्धिः नास्ति। कल्पनाप्रवणस्य अमलस्य कल्पनाविलासं दृष्ट्वा तत्सर्वं तस्य उन्माद इति स चिन्तयति। पण्डितजनाः तथा न कुर्वन्ति। यतो हि पण्डिताः अमलः इव वृथालापं न कुर्वन्ति। पितृष्वसृपतेः वास्तवज्ञानस्य अभिज्ञतायाश्च परिचयः लभ्यते यदा स अमलं वदति वैदेशिकाः जनाः तं धृत्वा नयन्ति चेत् किं करिष्यति इति पृच्छति। एतेषु लघुलघुकार्येषु आचरणेषु अपि माधवदत्तस्य प्रकृतचरित्रस्य मूल्यम् अवलोक्यते।

**पितामहः**

नाटकेऽस्मिन् पितामहः किमपि विशिष्टमुद्देश्यं वहति। अरूपस्य इङ्गितवाहकदूतरूपेण

आगतः पितामहः। पितामहेन रवीन्द्रनाथः ईश्वरसम्बन्धे तस्य उपलब्धिं विविधसंलापेषु व्यक्तीकरोति। एवं पितामहः राजा– अचलायतनादिरूपकेषु अपि एवमेव वर्तते। प्रायः समभावापन्नः, समानभावेन।

पितामहः रसिकः दृश्यते। अत्र स बालान् भ्रामयितुम् उत्तेजयितुं वा नायकः अस्ति। बालान् गृहात् बहिरानयनमेव तस्य वृद्धवयसि खेलः। नाटकस्य प्रथमतः एव तस्य उपस्थितिः अस्ति। प्रथमभागे अमलेन सह तस्य परिचयः वार्तालापः वा नासीत्। माधवदत्तस्य मुखात् स प्रथमतः अमलस्य कथां शृणोति। तस्य पितरौ न स्तः इति जानाति। माधवदत्तः पितामहं ज्ञापयति यद् अमलस्य दुरारोग्यव्याधेः कारणात् कविराजः तं शरदः रौद्रातपात् वायुवेगात् संरक्ष्य गृहमध्ये स्थातुम् अवदत्। किन्तु पितामहस्तु बालान् उत्साहान्वितान् कृत्वा गृहात् बहिः आनयने दक्षः अस्ति। तदर्थं तस्मात् माधवदत्तस्य अधिकं भयम्।

नाटकस्यादौ अमलेन सह तस्य परिचयो नास्ति। अमलेन सह तस्य आलापः भवति फकिर (उदासीन) वेशेन जातः। तद्दृष्ट्वा माधवदत्तः आश्चर्यचकितः जातः। नेत्रसूचनया स माधवदत्तं ज्ञापयति स पितामहो नास्ति, अपि तु फकिरः वर्तते। तेन माधवदत्तो जानाति यत् विविधवेशेन सः अमलस्य मनोरञ्जनं करोति इति। तदनु अमलेन सह तस्य दीर्घकथोपकथनं प्रचलति। वस्तुतः बहिर्जगतः नानाविधानि चित्राणि रूपकल्पानि इव आकर्षणीयशैल्या अमलस्य समक्षं समुपस्थापयति। विशेषतः क्रौञ्चद्वीपस्य कथा, या सत्यमेव चमत्कारकारिणी आसीत्।

अस्य पितामहस्य अन्यः परिचयः लभ्यते राज्ञः पत्रस्य विषये। स एव राज्ञः पत्रविषये अमलं विज्ञापयति। राजा तं जानाति इति सः अमलं ज्ञापयति। राज्ञः पत्रम् अवश्यम् आगमिष्यति इति स वारं वारम् अमलम् आश्वस्तं करोति। यदा मण्डलपतिः रिक्तं कर्गजं प्रदर्श्य तदेव राज्ञः पत्रमिति वदति, परिहासं करोति, तदापि पितामहः तं निश्चितं करोति। केवलं तावदेव नास्ति, स एतदपि वदति यत् तं द्रष्टुं स्वयं राजा आगच्छति। सहैव राजकविराजम् आनयति। इतः पूर्वं कोऽपि राजकविराजस्य विषये न वदति। वस्तुतः तस्य विश्वासः ईश्वरेऽपि दृढः आसीत्। तस्य संवादमपि स प्रदातुं शक्नोति। ततः परं राजकविराजः आगत्य जिज्ञासां करोति, अमलः कथम् अस्ति इति। अमलः सम्यक् अस्ति इति ज्ञापयति। अतः परम् अमलः चिरनिद्राम् अधिगच्छति।

नाटकेऽस्मिन् पितामहः ईश्वरेण सह मानवस्य योगसूत्ररक्षाकारी अस्ति। नाटकस्य मूलभावम् अवगन्तुम्, अमलचरित्रं विचारयितुं च पितामहस्य चरित्रस्य अपरिहार्यत्वं दृश्यते।

**कविराजः**

अस्मिन् नाटके अन्यतमं चरित्रमस्ति कविराजः। कविराजः पण्डितगोत्रीयः जनः। शास्त्राणां ग्रन्थानां जीवः। अयं बहिर्जगतः विचारं करोति ग्रन्थनियमैः। बहिःप्रकृतेः रूपं सौन्दर्यं वा न अवगच्छति। ग्रन्थकीटोऽयं ग्रन्थमध्ये एव मानवात्मनः समस्तरोगव्याधीनां निरामयस्य उपायान् पश्यति विश्वसिति च। तस्मात् विश्वासात् सः बहिर्गन्तुम् अमलं निवारयति, कारणं शरत्कालस्य रौद्रातपः वायुश्च अस्य कृते विषवत् अस्ति। वस्तुतः अनेन मानवात्मनः आत्मिकव्याधिं बहुगुणीकरोति।

नाटकस्य प्रारम्भे माधवदत्तः अमलविषये उद्विग्नः अस्ति। तां कथां स कविराजाय ज्ञापयति। तदा कविराजः कथयति यद्, आयुर्वेदे अमलस्य जीवनस्य सम्भावना स्वल्पा। अतः तस्य जीवनं मरणं च भाग्यहस्ते एव निहितम्। माधवदत्तः एतत्सर्वं श्रोतुं नेच्छति। तेन किं करणीयमिति पृच्छति। कविराजः ज्ञापयति सावधानेन स्थापयितुम्।

इतः परं कविराजस्य दर्शनं भवति पुनः अन्तिमदृश्ये। तदा अमलः शय्याशायी वर्तते। अमलं दृष्ट्वा स उत्तमं न मनुते। अमलः आत्मानं यावत् स्वस्थं वदतु नाम, कविराजः न स्वीकरोति। स चिन्तयति अमलस्य अयं हासः शुभलक्षणस्य प्रतीकं नास्ति। सर्वाणि द्वाराणि वातायनानि च सम्यक् रोद्धुं स निर्दिशति। गृहं गत्वा विषवटिकां प्रेषयति इति वदति। यदि जीविष्यति जीविष्यति। कविराजः यदा सर्वं रुद्धं करोति, तदा राजकविराजः आगत्य सर्वम् उद्घाटयितुं वदति। मुहूर्तमध्ये कविराजस्य सर्वं विधानं कर्तितं भवति। वस्तुतः अनेन कविराजचरित्रमाध्यमेन रवीन्द्रनाथः ग्रन्थकीटानां पण्डितानां चरित्रं सम्यक् उपस्थापितवान्।

**सुधा**

रवीन्द्रनाथकृते 'डाकघर' इति नाटके ध्यानेशनारायणचक्रवर्तिकृते अनुवादे 'वार्तागृहम्' इत्यत्र एकम् एव नारीचरित्रं वर्तते–सुधा। अस्मिन् रूपके सुधा सौन्दर्यस्य प्रतीकभूता अस्ति। सुधायाः हस्तस्थितं पुष्पं प्रेम्णः प्रतीकं वर्तते। प्रतीकधर्मिणः अस्य नाटकस्य मध्ये जीवात्म–परमात्मनोः अथवा परमात्म–मानवात्मनोः सम्पर्कः व्यञ्जितः अभवत्। अत्र सुधा एव केवलं प्रतीकहीना मानवीयप्रेममूर्त्तिः वर्तते। मानवः परमात्मना सह मेलितुम् इच्छतु कामं, पार्थवप्रेमाणं प्रति अपि तस्य व्याकुलता न्यूना नास्ति। तस्य मानवीय–पार्थिव–प्रेम्णः शरीरिणी मूर्त्तिः भवति सुधा। अस्मिन् प्रसङ्गे नीहाररञ्जनरायस्य मन्तव्यं मननीयमस्ति– 'वार्तागृहम्' इति नाटके यत्किमपि मानवचित्तस्य पार्थिवरसरहस्यं तत्सर्वं सुधां केन्द्रीकृत्य एव। सुधानिमित्तम् अमलचरित्रं प्रतीकमात्रम् इति न प्रतीयते। यवनिकापातस्य अव्यवहितपूर्वं नाटकस्य अन्तिमसंवादः 'सुधा त्वां न विस्मृतवतीति' नाटकं पूर्णतया रूपकमयं प्रतीकमयञ्च विद्यते।

## 11. समीक्षणम्

नाटकमिदं सदुक्तिभिः विविधार्थसम्भृतैः भावैः भरितमस्ति येन समालोचकैः नैके अर्थाः निस्सारिताः सन्ति। कदा पर्वतं लङ्घयितुं, कदा समयेन सह चलितुं, पत्रवाहकरूपेण सर्वत्र भ्रमितुं, बालानां क्रीडां द्रष्टुम्, उत्तमबन्धुः भवितुं राज्ञः पत्रं प्राप्तुं च तस्य इच्छा भवति, यत्र कदापि स गन्तुं न शक्तवान्। अनेन अमलस्य कल्पनाशीलता प्रत्यक्षीभवति। बालनाटकस्य इव भातस्य रूपकस्यास्य दार्शनिकमाध्यात्मिकं च महत्त्वं वर्तते। अस्य शीर्षकं न केवलं पत्रालयमात्रमपितु समस्ताह्वानस्य मूलकेन्द्रं वर्तते, यस्य आह्वानस्य प्रतीक्षानिरतः श्रवणमात्रेण धावति मरशरीरं विहाय, अमृतत्वस्य सन्धानेन। 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इत्यादिभिः रहस्यवादिप्रतीकैः पूर्णे नाटके संसारस्य विविधानां लालसानाम्, आकांक्षाणां, मनोभावानां च मूर्ततया वर्णने मूलनाट्यकार इव अनुवादकोऽपि सफलो दृश्यते। तस्य विविधेषु लेखेषु अयं भावः अतिदृढभावेन प्रकाशितः।

नाटकस्य केन्द्रीयचरित्रम् अमलः, यस्यार्थः अमलिनः। रुग्णः बालः अमलः सम्पर्कीयपितृष्वसृपतेः विषयाभिज्ञस्य माधवदत्तस्य पोष्यपुत्रः अस्ति। असीमममत्वहेतोः माधवः रुग्णस्य अमलस्य बहिर्गमनं निषिद्धयति। अमलस्य अयं रोगः किं प्रकृतं रोगः आहोस्वित् आत्मबन्धनपीडायाः व्याधिः। शासनभारेण क्लान्त–पीडितात्मनः क्रन्दनं तस्य मुक्तेराह्वानं च नाटके प्रदर्शितं नाट्यकारेण। अदम्यप्राणोच्छलमुक्तिभावना अमलस्य विविधासु उक्तिषु प्रतिबिम्बिता भवति। स पण्डितः भवितुं नेच्छति, परं साधारणजनः इव मुक्तेः आस्वादेन परिभ्रमणाय परिदर्शनाय च इच्छति। अमलस्य उक्तिषु तस्य अज्ञातपुरस्य सङ्केतः लक्ष्यते– '**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम**'[5] इति। अन्यत्र ऋषिः वदति- '**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्?**'[6] इति। परन्तु विषयिणः संसारिणश्च माधवदत्तादयः तदनुभवितुं न शक्नुवन्ति। तदर्थं राज्ञः नाम्ना एव माधवः आतङ्कितः, लोककल्पनातीतात् वार्तागृहात् पत्रेण मण्डलपतिः आश्चर्यान्वितः, परिहासप्रवणश्च भवति। नाटके गूढतत्त्वानां भाष्यकारोऽस्ति पितामहः। तस्य शुद्धा दृष्टिः। सोऽपि अनुभवति सुदूरस्य आह्वानम्। तस्य कल्पनाशक्तिरपि अमलस्य पार्श्वे पराजिता भवति।

अमलेन सह अपरचरित्रत्रयस्य निविडसम्पर्कः अस्ति– दधिविक्रेता, प्रहरी, सुधा च। सुधा काचित् मधुरभाषिणी कन्या। तस्याः संलापाः तस्याः चारित्रिकवैशिष्ट्यं प्रकाशयन्ति। सा निर्झरिणीव गतिमयी, चञ्चलप्राणा च वर्तते। अमलेन सह सुधायाः कथोपकथने तदेव प्रतिविम्बितमस्ति। अन्यत्र प्रहरी अत्र कालस्य प्रतीकः इव विराजते। महायात्रायाः

सफल-व्यख्याकारः प्रहरी मृत्युदेशं सङ्केतीकृत्य घण्टां नादयति।

'नायमात्मा प्रवचनेन लभ्यः'[7] इति अस्य मानवात्मनः प्रतीकः वर्तते अमलः। आत्मनो मोक्षाय जगद्धिताय च खलु मानवस्य प्रवृत्तिः। अतः मानवस्य सर्वश्रेष्ठः पुरुषार्थः भवति मोक्षः। बद्धजीवेन मोक्षाय यतनीयम्। स राज्ञा सह अरूपेण सह मेलितुम् अधीरः भवति। अत्र निद्रा इव मृत्युः मुक्तिश्च शाश्वतिकी। हिन्दुधर्मानुसारेण पुनरपि मरणं पुनरपि जननं, पुनरपि जननीजठरे शयनम्। निद्रायाः परं जीवः यथा उत्तिष्ठति, मरणात् परं तथा जन्म नयति। तेन सह ईश्वरस्य समीपवर्ती भवति। वस्त्रपरिवर्तनमिव घटपरिवर्तनम्। यथा–

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोपराणि।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही।।**[8]

वार्तागृहस्य नामकरणेऽपि सङ्केतस्य व्यवहारो दृश्यते। वार्तागृहं भवति विश्वजगत्। वार्ता पत्रं वा भवति तस्य सौन्दर्यमयी आनन्दमयी च वार्ता। नाटके अमलः मानवात्मनः प्रतीकम्। सदा मुक्तस्वरूपः मानवात्मा सामयिकभावेन बद्धः भवतु नाम सदा मुक्तेः आनन्दम् इच्छति। मानवात्मा विश्वात्मना मेलितुमिच्छति। एवं सम्पूर्णनाटके नाटकस्य नामकरणे च नाट्यकारः रुद्ध–बद्ध–जीवस्य कृते आनन्द–सौन्दर्य–मुक्ति–वाणीं प्रापयितुमिच्छति अमलचरित्रमाध्यमेन। प्रतीकानां सङ्केकानां च स्पर्शेन यथार्थतः नाटकमिदं रूपकसङ्केतनाटकरूपेण प्रतिष्ठितं भवति। नाटकस्य अन्ते मानवीयप्रेम्णः करुणसजलस्पर्शेन नाट्यकारः तस्य शिल्पसम्भारं 'Tragic' माधुर्येण विभूषयति।

**12. पत्रालयः**

डॉ. ध्यानेशनारायणचक्रवर्तिना कृतस्य 'वार्तागृहम्' इत्यस्य प्रायः शतवर्षेभ्यः परं रवीन्द्रनाथस्य सार्धशतवर्षपूर्त्यवसरे सद्यः एव प्रकाशितो वर्तते तस्यापरः अनुवादः 'पत्रालयः' (2012) इति शीर्षकेण संस्कृतसाहित्ये प्रतिष्ठितेन कथाकारेण कविना समीक्षकेण अनुवादकेन बनमालिबिश्वालेन।

बालनाटकस्य इव भातस्यास्य रूपकस्य दार्शनिकमाध्यात्मिकं च महत्वं वर्तते। अस्य शीर्षकं न केवलं पत्रालयमात्रमपितु समस्ताह्वानस्य मूलकेन्द्रं वर्तते, यस्य आह्वानस्य प्रतीक्षानिरतः श्रवणमात्रेण प्रधावति मरशरीरं विहाय, अमृतत्वस्य सन्धानेन।

एवं मूलस्य 'डाकघर' इति नाटकस्य शतवर्षपूर्तिः भवति (1912–2012)। तेन सह रवीन्द्रनाथस्य अन्यविषयाः यथा वारं वारमनूदिताः तथैव नाटकमिदं त्रिवारमनूदितं

केवलं संस्कृतेन। 1966 ईशवीयसंवत्सरे रवीन्द्रसंस्कृते प्रकाशितस्यास्य 1988 ईशवीयसंवत्सरे परिवर्तनं परिवर्धनं च कृतवान् पूर्वेणैवानुवादकेन ध्यानेशनारायणचक्रवर्तिना।

अधुना सारल्येन पुनराम्रेडितवान् डॉ. बनमालिबिश्वालमहोदयः। त्रयाणामपि उदाहरणानि दृष्ट्वा वयमनुवादकानां शैलीमनुमातुं शक्नुमः। यथा–

अनुवादद्वयेऽपि ध्यानेशनारायणचक्रवर्तिना भिन्ना भिन्ना प्रस्तावना योजिता।

* यद्यपि ध्यानेशनारायणचक्रवर्तिनः अनुवादः वङ्गमूलेन सह संवादं करोति, तथापि संस्कृतपदानि तस्य सरलानि न सन्ति। यथा चिकित्सकस्य कृते स भिषक् शब्दं प्रयुङ्क्ते यत्र बनमालिबिश्वालो वैद्यपदं प्रयुङ्क्ते। माधवदत्तस्य प्रथमसंवादस्य अनुवादौ यथा–

* 'विपदमापन्नोऽस्मि। यदा स नासीत्, तदा नासीदेव, कापि चिन्तापि नासीत्। अधुना कुत आगत्य स कक्षं मे पूरितवान्। गते तस्मिन् कक्षं मे न कदापि कक्षं स्यात्। भिषङ्महोदय, भवता किं मन्यते यद् अमुम् ...।'[१] इति।

* एवञ्च 'वार्तागृहम्', 'पत्रालयः' इति शीर्षकद्वयादपि ज्ञायते यत् डॉ. ध्यानेशनारायणचक्रवर्तिना पारम्परिकशैल्या अनुवादो विहितस्तथा बनमालिबिश्वालमहोदयेन कृतः अनुवादः सरलीकृतः। अपि च बिश्वालमहोदयेन हिन्द्यनुवादादनूदितमपि नाटकमिदं कदाचित् सारल्यवशात् मूलानुसारि मञ्चनयोग्यं च प्रतीयते।

**13. वार्तागृहनाटकस्य रूपकप्रकारः**

संस्कृतसाहित्यं मुख्यतः द्विधा विभक्तं दृश्यं श्रव्यञ्चेति। प्रथमतः दशरूपकाणि दशोपरूपकाणि च निरूपितानि आसन् नाट्यशास्त्रे दशरूपकग्रन्थे च। क्रमशः सा सङ्ख्या भोजदेवस्य काले द्वादशतां गता। साहित्यदर्पणे अष्टादशप्रायाणि उपरूपकाणि निरूपितानि सन्ति। एतानि वस्तु–नेतृ–रसादिभेदैः परस्परं भिद्यन्ते। अङ्क–सन्धि–सन्ध्यङ्गभेदेन एतेषां नैके अवान्तरभेदाश्च जाताः। पाश्चात्यशैल्याः अनुकरणेन वस्तुदृष्ट्या एकाङ्कनाटकानां नैके आधुनिकभेदाः अपि दृश्यन्ते। यतोहि नाट्यं भवति प्रायोगिकं शास्त्रम्। यथा संस्कृते तथा प्रान्तीयभाषासु अपि तदा तदा विविधप्रयोगाः भवन्ति स्म।

रवीन्द्रनाथठाकुरस्य रूपकनाटकानि प्रतीकनाटकानि वा अत्युच्चशिखरारूढानि सन्ति। वङ्गसाहित्ये पूर्वं तथा नाटकानि प्रायशः न रचितानि। रवीन्द्रनाथस्य अरूपसाधनायुगस्य इदं नाटकं वर्तते। नाट्यसमालोचकैः इदं नाटकं रूपकसाङ्केतिकनाटकरूपेण रूपकसङ्केतमिश्र–नाटकरूपेण वा परिगणितम्।

रूपकनाटकस्य आङ्गलप्रतिशब्दः अस्ति 'Allegory' इति। अस्यार्थः भवति एकं बोधयितुं भिन्नमार्गेण कथनम्। 'Allegorical Drama' रूपकनाटकम् इत्युक्ते तथाविधं

रचनं भवति यत्र कथावस्तु घटना–चरित्राणि वा उपलक्षणमात्राणि सन्ति, लक्ष्यं तु भिन्नः कश्चन भावः तत्त्वं वा। मूलकथायाः समान्तरालेन अन्तर्निहितः भावः अपि अत्र व्याख्यातः भवति।

'Symbol' इत्यस्य वङ्गीयः प्रतिशब्दः भवति सङ्केतः। परन्तु 'Symbolical Drama' इत्यस्य अर्थः भवेत् साङ्केतिकनाटकम्। परन्तु केचन प्रतीकनाटकमिति कथयन्ति। सङ्केत–प्रतीकयोः मध्ये पार्थक्यं यद्यपि अधिकं नास्ति, तथापि अर्थः समानः नास्ति। प्रसिद्धः समालोचकः Comte महोदयः प्रतीकस्य वैशिष्ट्यं प्रतिपाद्य वदति – 'Symbol means every conventional representation of the idea by the forms of the unseen by the visible.'

**14. उपसंहृतिः**

नाटकं नाम प्रयोगविज्ञानम्। कालिदाससमारोहे, केन्द्रीयसंस्कृतविश्वविद्यालयस्य नाट्यमहोत्सवेषु च एषु दिनेषु अनूदितानि नाटकानि अपि प्रदर्शितानि भवन्ति। एकदा रवीन्द्रस्य विविधभावभरितानि नाटकानि अपि संस्कृतानुसर्जकानां समक्षम् आह्वानानि इव आदर्शरूपेण वा स्थितानि स्युः। यदर्थं वेङ्कटराघव– के.टि. पाण्डुरङ्गिध्यानेशनारायण-चक्रवर्तिप्रभृतयः तत्र लेखनीं चालितवन्तः।

एतदेव वेङ्कटराघव–रामजीउपाध्याय–सुरेशचन्द्रवन्द्योपाध्याय–ऋताचट्टोपाध्यायेत्यादिभिः बहुभिः आचार्यैः आकलितं तथ्यं यत् विगते शतकत्रये लिखितं संस्कृतसाहित्यं न केवलमितरभाषासाहित्येन स्पर्धयितुमलम् अपितु तत्कालं विहितम् अनूदितसाहित्यं ततोऽपि अग्रगामि इति।

किञ्च रवीन्द्रसाहित्यस्य पर्याप्ततया प्रचारः आङ्गलानुवादेन भवितुं शक्नोति। परन्तु कवीन्द्रस्य संस्कृतनिष्ठानां भावगम्भीरपदानाम् आङ्गलानुसर्जनं कष्टाय कल्पते। अतः कष्टकल्पनया व्यक्तिरनुभावविभावयोः इति कष्टकल्पनमिति दोषस्तत्र स्यात्। अपि च सर्वे आङ्ग्लानुबोधनक्षमाः न सन्ति एव। तर्हि संस्कृतमेव शरणं मूलत्वात् सर्वभाषाणाम् इति शिवम्।

*

## सन्दर्भाः


1. नाट्यशास्त्रम्, 2.114–116
2. संस्कृतसाहित्यपरिषत्पत्रिका।
3. डॉ. नारायणदाशकृतात् संस्कृतसाहित्ये पश्चिमवङ्गस्यावदानम् इति ग्रन्थात् स्वीकृतम्,पृ.414
4. मुक्तधारावार्तागृहम्, पृ.13
5. श्रीमद्भगवद्गीता, 15.6
6. ऋग्वेदः, 1.22.20
7. मुण्डकोपनिषत्, 3.2.3
8. श्रीमद्भगवद्गीता, 2.22
9. मुक्तधारावर्तागृहम्, पृ. 86


*

# भवानन्दाभिमतलृङर्थविमर्शः

**प्रलय-नन्दी**

**प्रबन्धसारः —** लृङ्–लकारस्य हेतुहेतुमद्भावे क्रियातिपत्तौ भूते भविष्यति च प्रवृत्तिर्भवति। लकारार्थनिर्णयग्रन्थे भवानन्देन लकाराणामर्थविषये विस्तृतो विचारः कृतः। तन्मतानुसारं प्रकृतप्रबन्धे लृङर्थस्य संक्षिप्तो विमर्श उपस्थाप्यते। तत्र लृङर्थकुक्षौ प्रविष्टस्य एकैकस्यांशस्य अत्र विचारः क्रियते किञ्च मतान्तरोपस्थापनपुरःसरं तेषामंशानां विमर्शः प्रस्तूयते।

**मूलशब्दाः** – भूतत्वम्, भविष्यत्त्वम्, क्रियातिपत्तिः, हेतुहेतुमद्भावः।

**उपोद्घातः —** षोडशशतके बङ्गीयनव्यन्यायपरम्पराया अन्यतमो विद्वान् आसीत् भवानन्दसिद्धान्तवागीशः। शिरोमणिग्रन्थानां टीकारचनाद्वारा अयं तदानीन्तने काले भारतस्य सर्वत्र विख्यातो बभूव। अनेन न केवलं नव्यन्यायपरम्परोपयोगिनो ग्रन्था विरचिता अपि तु शब्दार्थसारमञ्जर्यादयो मौलिकग्रन्था अपि विरचिताः। तत्र शब्दार्थसारमञ्जर्याः प्रकरणभूते लकारार्थनिर्णयाख्ये ग्रन्थेऽनेन लडादीनां लकाराणामर्था विचारिताः। लडादीनां लकाराणामर्थतः किं स्वरूपं किञ्च तेषां प्रवृत्तिनिमित्तमिति विषयेऽत्र विस्तरेणालोचनं कृतम्। ग्रन्थोऽयं नव्यन्यायग्रन्थः, अतो नव्यनैयायिकैराचार्यैः प्रतिपादितानि मतान्येवात्र प्रधानतः सिद्धान्तरूपेण उपस्थाप्यन्ते किञ्च नव्यन्यायसम्प्रदायानुमतस्य लकारार्थस्वरूपस्य प्रकाशने ग्रन्थस्यास्य महती उपयोगिता सिध्यति। तथापि सम्प्रदायान्तरमतानामपि अत्र प्रतिपादनं कृतम्। स्थले स्थले भवानन्देन पाणिनीयसूत्राणि प्रमाणत्वेन उल्लिख्यन्ते, विचारावसरे मीमांसकमतानि समर्थ्यन्ते क्वचिच्च पूर्वपक्षत्वेन समालोच्यन्ते। यथाप्रसङ्गं स्वकीयमतान्यपि योजयति सिद्धान्तवागीशो भवानन्दः। एवं विविधमतानां समाहारत्वाद् विद्वत्सु ग्रन्थस्यास्योपयुक्तत्वम् अनुमातुं शक्यम्। प्रयोगबाहुल्यात् लडादीनां लकाराणामर्थविषये तथा संशयावसरो न दृश्यते यथा स्वल्पप्रयुक्तानां लृङादीनां लकाराणां विषयेऽवलोक्यते। अतस्तद्विषये विद्वत्सु विरोधावसरः प्रबलः। प्रकृतप्रबन्धे लृङर्थविषये विचार उपस्थाप्यते। हेतुहेतुमद्भावे क्रियातिपत्तौ भूते भविष्यति चार्थे धातुभ्यो लृङ्–लकारो विधीयत इति प्रसिद्धिः। अत्र प्रसङ्गे भवानन्दस्य नास्ति कापि विप्रतिपत्तिः, किन्तु लृङर्थकुक्षौ प्रविष्टानां क्रियातिपत्त्याद्यंशानां स्वरूपं भिद्यत इति विशेषः। प्रबन्धेऽमुष्मिन्

तत्र प्रतिपादितं लृङर्थमाश्रित्य संक्षिप्तो विचारः प्रस्तूयते। अत्र प्रथमतो भवानन्दाभिमतो लृङर्थो निरूपितस्तदनु विविधविधिदिशा विमर्श उपस्थाप्यते।

**भवानन्दाभिमतलृङर्थः –** लोकेऽस्मिन् विवक्षितार्थप्रतिपादनाय वाक्यप्रयोगो विधीयते। 'सुप्तिङन्तचयो वाक्यमि'ति' वचनाद्वाक्यं सुबन्ततिङन्तोभयात्मकं भवति। तिङन्तेषु धातुभ्यः प्रथमतो लडादयो लकारा विधीयन्ते, तदनु लकाराणां स्थाने तिङ्–प्रत्यया आदिश्यन्ते। लडादीनां वर्तमानाद्यर्थाः सम्प्रदायेषु प्रसिद्धाः, आख्यातार्थः काल इत्यपि केषाञ्चिदभिमतिः। अत्र पक्षद्वयं विद्यते – (1) उच्चारितः शब्दः प्रत्यायको नानुच्चारितः इति न्यायेन आख्यातेभ्य एव कर्तृकर्मकालाद्यर्थप्रतीतिः, (2) लाघवाल्लकारा एव कर्तृकर्मकालाद्यर्थवाचका इति च। लकाराः कालाद्यर्थप्रत्यायका इति प्रधानतो नैयायिकानां सिद्धान्तः। तच्च प्रत्यायकत्वं वाचकत्वेन द्योतकत्वेनेति उभयथापि सम्भवति। भवानन्दमते हेतुहेतुमद्भावः क्रियातिपत्तिः भूतत्वं भविष्यत्त्वञ्च लृङर्थः। तन्मते क्रियाया अतिपत्तौ गम्यमानायां हेतुहेतुमद्भावे सति भविष्यदर्थे भूतार्थे च लृङ्–लकारस्य प्रवृत्तिर्भवति। एवञ्च क्रियाया अनिष्पत्तौ गम्यमानायां हेतुहेतुमद्भावे गम्ये भविष्यदर्थे धातुभ्यो लृङ्–लकारः प्रवर्तते किञ्च क्रियाया अनिष्पत्तौ गम्यमानायां हेतुहेतुमद्भावे गम्ये भूतार्थे धातुभ्यो लृङ्–लकारः प्रवर्तत इति विषयसारो लभ्यते। सम्प्रति लृङर्थकुक्षौ प्रविष्टस्य एकैकस्यांशस्य भवानन्ददिशा विचारः प्रस्तूयते।

**( 1 ) हेतुहेतुमद्भावः –** धात्वर्थयोः कार्यकारणभावः प्रयोज्यप्रयोजकभावो वात्र हेतुहेतुमद्भावः। अस्य हेतुहेतुमद्भावस्य लृङर्थत्वेन प्रतीतौ 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ'[2] इति पाणिनिसूत्रं प्रमाणत्वेनोपस्थाप्यते। 'हेतुहेतुमतोर्लिङ्' इति सूत्रेण हेतुहेतुमद्भावे लिङ्–लकारो विधीयते। अत्र हेतुः कारणम्, हेतुमत्फलम्। हेतुहेतुमद्भाव उपस्थितत्वात्क्रियान्वयी, ततश्च धात्वर्थयोरेव हेतुहेतुमद्भाव इति लभ्यते। एवञ्चानेन सूत्रेण धात्वर्थयोः कार्यकारणभावे गम्ये धातुभ्यो लिङ्–लकारो विधीयते। अस्मिन्नेव लिङ्निमित्ते हेतुहेतुमद्भावेऽर्थे लृङ्–लकारोऽपि विधीयत इत्याशयो लभ्यते।

**( 2 ) क्रियातिपत्तिः –** क्रियाया अतिपत्तिरित्यस्य अतिक्रमेण पतनं सम्भावनं वार्थः। अत्र प्रसङ्गे क्रियाद्वयं लभ्यते-कारणभूतक्रिया कार्यभूतक्रिया च तदुभयोरपि क्रियायोः अतिपत्तिरत्र विवक्ष्यते। यस्मिन् काले देशे वा धात्वर्थस्य अस्तित्वमुपलभ्यते तद्भिन्ने काले देशे वा धात्वर्थस्य सम्भावनमिति आशयः। एतच्च सम्भावनं द्विविधं भवति–बाधानवतारे तत्कोटिकसंशयरूपं, बाधावतारे आहार्यज्ञानरूपञ्च। बाधानवतारो बाधाभावनिश्चयः। तथाहि–देशरूपे कालरूपे वाधिकरणे धात्वर्थस्य अन्वयायोग्यतानिश्चयो बाधनिश्चयः, तस्यानवतारोऽभावनिश्चयः। ईदृशे धात्वर्थविषयके बाधाभावनिश्चये धात्वर्थप्रकारकः संशयः

प्रथमप्रकारकं सम्भावनम्। एवं बाधावतारेऽर्थाद् यत्र देशे काले वाधिकरणे धात्वर्थस्य अन्वयायोग्यतानिश्चयो वर्तते तादृशे बाधनिश्चयस्थले धात्वर्थस्याहार्यज्ञानं द्वितीयप्रकारकं सम्भावनम्। आहार्यज्ञानञ्च बाधनिश्चयकालीन इच्छाप्रयोज्यो विरोधिविषयकनिश्चयः। तथा च यत्र धात्वर्थस्य बाधनिश्चयस्तत्र धात्वर्थविषयकः संशयो भवितुं नार्हतीति इच्छावशात् आहार्यारोपः सम्भवति। नैयायिकानां सम्प्रदाये प्रथमान्तार्थमुख्यविशेष्यकस्य शाब्दबोधस्य सिद्धान्तितत्वाद्भवानन्दमते द्विविधसम्भावनायामपि शाब्दबोधे धात्वर्थस्य प्रकारतया प्रथमान्तार्थस्य च विशेष्यतया भानं भवतीति बोध्यम्।

अत्र क्रियातिपत्तेरुदाहरणं यथा, यदि वर्षसहस्रमजीविष्यं तदा पुत्रशतमजनयिष्यमिति। अस्मिन्वाक्ये अहमिति कर्तृवाचकं पदमध्याहार्यम्। अत्र सम्भावनात्मके शाब्दबोधे जीवधात्वर्थस्य जीवनस्य प्रकारतया अहमिति प्रथमान्तार्थस्य विशेष्यतया च प्रतीतिर्भवति उदाहरणवाक्ये यदि– शब्दस्यानिर्धारितकालविशेषोऽर्थः, तस्य जीवधात्वर्थे जीवनेऽन्वयो भवति। द्वितीयायाश्च व्यापकत्वमर्थः। एवञ्चोक्तवाक्याद् अनिर्धारितकालविशेषवृत्ति–भविष्यद्धेतुभूत–सहस्रवर्षव्यापक-जीवनप्रकारक–सम्भावनाविषयः अहं तत्कालीनभविष्यत्कार्यीभूत–शतपुत्रकर्मकोत्पत्त्यनुकूल-व्यापारप्रकारक–सम्भावनाविषयः इति बोधो जायते।

अत्र स्वस्मिन् बाधावतारेऽर्थाद् धात्वर्थजीवित्वस्याभावनिश्चये आपत्तिरेव सम्भावनम्। शतपुत्रोत्पत्त्यनुकूलव्यापाराभाववानहमिति निश्चये यद्यहं सहस्रवर्षव्यापकजीवनवान् स्यां तदा तादृशपुत्रकर्मकोत्पत्त्यनुकूलव्यापारवान् स्यामित्याकारक आहार्यारोप एव सम्भावनमिति भावः। अथ धात्वर्थजीवित्वस्य अभावानिश्चये तु प्रतिबन्धकासत्त्वात् संशयात्मकमेव सम्भावनमिति बोध्यम्। अत्र संशयाकारस्तु अहं तादृशजीवनवान्न वा, अहं तादृशपुत्रकर्मकोत्पत्त्यनुकूलव्यापारवान्न वेति अवधेयः। अन्ततोऽयमत्र आशयो लभ्यते यदत्र लृङ्–लकारस्थले सर्वत्रापि शाब्दबोधः परोक्षात्मक एव भवतीति।

**मतान्तरम्–** क्रियातिपत्तिशब्दार्थविषये मतान्तरमपि उपलभ्यते, अस्मिन्मते प्रसक्तक्रियाया अभाव एव क्रियातिपत्तिशब्दस्यार्थ इति प्रतिपाद्यते। यद्यपि धातोः क्रियायामेव शक्तिस्तथापि क्रियाभावे धातोर्लक्षणेति प्रतिपाद्यते, लक्षणाप्रवृत्तौ च यदिशब्दस्य तात्पर्यग्राहकत्वं स्वीक्रियते। एवञ्चास्मिन्पक्षे अनिर्द्धारितकालविशेषो न यदिशब्दस्यार्थ इति समायातम्। लृङ्–प्रत्ययेन च हेतुहेतुमद्भावस्य यथायथमतीतत्वस्यानागतत्वस्य च प्रतीतिर्जायते। हेतुहेतुमत्त्वस्य अतीतत्वभविष्यत्त्वान्यतरस्य च धात्वर्थीभूतक्रियाभावेऽन्वयो भवतीति विशेषः। तथा चात्र मते यदि वर्षसहस्रमजीविष्यं तदा पुत्रशतमजनयिष्यमित्यादौ वाक्ये अनागतकालसम्बन्धि–हेतुभूतवर्षसहस्रजीवित्वाभाववान् अहम् अनागतकालसम्बन्धि–जन्यीभूतपुत्रशतोत्पादकत्वाभाववान्

इत्याकारकः शाब्दबोधो जायते। अत्र च अनागतकालसम्बन्धि–वर्षसहस्रजीवित्वाभावहेतुको मम शतपुत्रोत्पादकत्वाभाव इति पर्यवसितोऽर्थो लभ्यते।

**लृङो द्विधा प्रयोगः –** प्रयोगपथे लृङ्–लकारस्य द्विधोपयोगो दृश्यते। भविष्यदर्थे भूतार्थे च गम्यमाने लृङः प्रवृत्तिर्भवति। एवञ्च भविष्यदर्थको लृङ् भूतार्थको लृङ्ङिति रीत्या प्रयोगतो लृङो द्विधा भेदः सम्भवति। सम्प्रति अनयोरुपस्थापनं विधीयते –

**( क ) भविष्यदर्थकलृङ् –** 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ ' इति सूत्रे 'भविष्यति मर्यादावचनेऽवरस्मिन्'[5] इत्यतो भविष्यतीत्यस्यानुवृत्तेः भविष्यत्यर्थे लृङ्–लकारः सिध्यति। वर्तमानप्रागभावप्रतियोगित्वमिति भविष्यत्स्वरूपं व्याख्यातं भवानन्देन। वर्तमानकालेऽर्थात् पक्ष्यतीत्यादिलृडन्तपदप्रयोगकाले विद्यमानो यः प्रागभावस्तत्प्रतियोगित्वं भविष्यतत्त्वमित्याशयः। एवञ्च भविष्यदर्थकलृङा लृङ्निष्ठवृत्त्या भविष्यत्त्वं हेतुहेतुमद्भावः क्रियातिपत्तिश्चेति पदार्थत्रयस्य प्रतीतिर्भवति। तेषु हेतुहेतुमद्भावस्य क्रियायामन्वय इति प्रतिपादितम्। भविष्यत्त्वस्य तु कृत्यर्थकाख्यातस्थले कृतौ, आश्रयत्वार्थकाख्यातस्थले च धात्वर्थेऽन्वय इति विशेषः। तथाहि यत्राख्यातप्रत्ययस्य कृत्यर्थकत्वं तत्र भविष्यत्त्वं कृतावन्वेति। अत एव अपचिष्यमित्यादिस्थले पाकानुकूलभाविकृतिमानहमिति बोधो जायते। यत्र त्वाख्यातस्य आश्रयार्थकत्वं तत्र भविष्यत्त्वं धात्वर्थ एवान्वेति। यथा अज्ञास्यमिति स्थल आख्यातस्य ज्ञानाश्रयार्थकत्वं, अतोऽत्र भविष्यत्त्वस्य धात्वर्थे ज्ञानेऽन्वयः। ततश्च भाविज्ञानाश्रयोऽहमिति बोधो जायते। यदि वर्षसहस्रमजीविष्यं तदा पुत्रशतमजनयिष्यमित्यादि अस्मिन्पक्षे उदाहरणं बोध्यम्। अस्य वाक्यस्य विचारः पूर्वमेवोपस्थापितः।

**( ख ) भूतार्थकलृङ् –** 'भूते च'[6] इति सूत्रेण क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे भूतार्थे च धातुभ्यो लृङ्–लकारो विधीयते। भवानन्देन वर्तमानध्वंसप्रतियोगित्वरूपं भूतत्वं प्रतिपादितम्। वर्तमानकालिको यो ध्वंसः सोऽतीतक्रियाध्वंसः, तादृशध्वंसे प्रतियोगिनी यातीतक्रिया तस्यां ध्वंसप्रतियोगित्वम्, तदेव भूतत्वमिति भावः। एवञ्चात्र पक्षे लृङ्–लकारेण वर्तमानध्वंसप्रतियोगित्वरूपमतीतत्वं हेतुहेतुमद्भावः क्रियातिपत्तिश्चेति त्रिविधः पदार्थः प्रकाशते। पूर्वं प्रतिपादितं द्विविधं सम्भावनमेवात्र क्रियातिपत्तिः, तदेव प्रसञ्जनमित्युच्यते। भूतार्थकलृङ उदाहरणं यथा - यदि शिलाः कोमला अभविष्यंस्तदा क्रोष्टृभिरभक्षयिष्यन्त इति। अत्र लृङ्–लकारेणातीतत्वं हेतुहेतुमत्त्वं प्रसञ्जनञ्चेति त्रयोऽर्थाः प्रकाशन्ते। यदीत्यस्यासत्त्वं कालविशेषश्चार्थः, अनिर्धारितकालविशेषश्च फलितार्थः। असत्त्वम् अभावप्रतियोगित्वं, तस्य धात्वर्थेऽन्वयो भवति। अभावे प्रथमान्तार्थः शिलापदार्थोऽन्वेति। एवञ्चोक्तवाक्यात् स्ववृत्त्यभावप्रतियोगिहेतुभूतातीतकोमलीभवनप्रकारक–प्रसञ्जनविषयाः शिलाः तत्कालीनक्रोष्टृवृत्त्य-

भावप्रतियोग्यतीतकृतिजन्य–भक्षणकर्मत्वेन प्रसञ्जिता इति बोधो जायते।

प्रकृतोदाहरणवाक्ये स्ववृत्त्यभावप्रतियोगित्वं हेतुभूतत्वम् अतीतत्वमिति त्रितयमपि धात्वर्थे कोमलीभवनेऽन्वेति। कोमलीभवनरूपस्य च धात्वर्थस्य प्रकारविधया लृङर्थे प्रसञ्जनेऽन्वयः। तत्कालीनत्वरूपार्थो द्वितीयदलोपात्तेन तदा–शब्देनोपस्थाप्यते, अस्य चानिर्धारितकालविशेषवृत्तित्वं फलितार्थः। अत्र तत्कालीनत्वं क्रोष्टृवृत्तित्वम् अभावप्रतियोगित्वमतीतत्वमिति चतुष्टयं कर्माख्यातार्थे कृतावन्वेति।

**विमर्शः –** (1) लृङ्–लकारस्य हेतुहेतुमद्भावाद्यर्थकत्वे 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इत्यादिसूत्रप्रामाण्यं भवानन्देनापि स्वीक्रियते, अतो लृङर्थविषये वैयाकरणैः सह कोऽपि मतभेदो न दृश्यते। किन्तु क्रियातिपत्तिपदार्थविषये व्याख्यानभेदोऽवलोक्यते। शाब्दिकैः क्रियातिपत्तिशब्दे अतिपत्तिशब्दस्य अनिष्पत्तिरनुपपत्तिर्वार्थः प्रतिपादितः। एवञ्च क्रियातिपत्तिरित्यस्य क्रियाया अभाव इत्यर्थः सिद्धान्तितः। भवानन्देन तु अतिपत्तिशब्दस्य अतिक्रमेण पतनं तथा सम्भावनमित्यर्थो निर्धारितः। ततश्च क्रियातिपत्तिरित्यस्य क्रियाया धात्वर्थस्य सम्भावनं प्रसञ्जनं वेति तात्पर्यं प्रतिपादितम्। तदनु सम्भावनस्य द्वैविध्यं प्रतिपाद्य तत्र अर्थविस्तारः कृतः। भाष्यकृता त्वत्रानिष्पत्तिरूप एवार्थः सिद्धान्तरूपेण स्वीकृतः। अत्रोभयमतेऽपि अन्ततः क्रियाया अभाव उपलभ्यत इत्यवधेयम्।

(2) प्रकृतग्रन्थे क्रियातिपत्तावेव लृङः प्रवृत्तिरुल्लिखिता। भाष्यकृता क्रियातिपत्तिवत् साधनातिपत्तावपि लृङः प्रवृत्तिर्विचारिता। क्रियाया धात्वर्थस्यातिपत्तौ यथा लृङः प्रवृत्तिस्तथा क्रियायां साधनस्य करणस्य वा अतिपत्तावपि लृङ्–लकार इष्यत इत्याशयः।[८] अभोक्ष्यत भवान्मांसेन यदि मत्समीप आसिष्यतेत्यस्य तत्रोदाहरणत्वं प्रतिपादितम्।[९] अत्र मांसस्यानिष्पत्तिः, भोजनक्रियायास्तु निष्पत्तिरिति स्थितिः। एवञ्चैतन्मतानुसारं कदाचित् क्रियाया निष्पत्तावपि साधनस्य मांसादेरनिष्पत्तेः लृङ् सिध्येत्। परन्तु क्रियातिपत्तौ सत्यामेव लृङः प्रवृत्तिः, तत्र साधनातिपत्तेर्न कोऽपि प्रसङ्ग इत्येव सिद्धान्तपक्षः। तथाहि क्वचित्साधनस्य अतिपत्तौ सत्यां वस्तुतः क्रियाया अप्यतिपत्तिर्जायत एव। प्रकृते मांसस्यातिपत्तावपि भोजनक्रिया यद्यपि सम्भवति किन्तु सा न मांसभोजनक्रिया, अपि तु मांसभिन्नभोजनक्रियते रीत्या साधनस्य मांसस्यातिपत्तौ क्रियाया मांसभोजनक्रियाया अप्यतिपत्तिः सिध्यति। एवञ्चात्रोदाहरणे मांसभोजनक्रियाया एवातिपत्तिमादाय लृङ्–लकारः प्रवृत्तो न तु मांसस्येति निर्वाहो बोध्यः।

**उपसंहारः**

लिङः प्रवृत्तिनिमित्तं हेतुहेतुमद्भावः, तस्मिन् हेतुहेतुमत्त्वे गम्यमाने क्रियातिपत्तौ चार्थे सामान्यतो लृङ्–लकारस्य प्रवृत्तिर्भवति। तत्र क्वचिद्भूतार्थः प्रतीयते क्वचिच्च भविष्यदर्थो

बोध्यत इति विशेषः। भूतार्थकलृङा क्रियातिपत्तेः, हेतुहेतुमद्भावस्य अतीतत्वस्य चेति त्रितयस्य प्रतीतिः, भविष्यदर्थकलृङा क्रियातिपत्तेः, हेतुहेतुमद्भावस्य अनागतत्वस्य चेति त्रितयस्य प्रतीतिरिति सारः। धात्वर्थस्य क्रियायाः सम्भावनमेव क्रियातिपत्तिरिति भवानन्दस्याग्रहः। क्रियाया अनिष्पत्तिरेव क्रियातिपत्तिरिति च शाब्दिकानामभिमतिः। मतभेदेऽपि क्रियाया अभाव उभयपक्षे उपयुज्यत इति विशेषः। महाभाष्ये यद्यपि क्रियातिपत्तिवत् साधनापत्तावपि लृङः प्रवृत्तिर्विचार्यते, किन्तु साधानातिपत्तेरपि क्रियातिपत्तावेव पर्यवसानमित्यतः तस्य पक्षस्यैकदेशित्वं सिद्धान्तितम्। लृङ्–लकारस्य प्रयोगस्थले आहार्यात्मकः शाब्दबोधो जायते, ईदृशशाब्दबोधे प्रतिबन्धकसत्त्वेऽपि इच्छाप्रयुक्त एव बोध उपपद्यते। किञ्चात्र यद्यादिपदसमभिव्याहारस्य नियामकत्वं व्यवस्थितमिति विशेषः। एवमत्र प्रबन्धे भवानन्दाभिमतस्य लृङर्थस्य संक्षिप्तो विमर्श उपस्थापितः, तत्र युक्तत्वायुक्तत्वे विद्वांस एव प्रमाणमितिमात्रं विनिवेद्य अत्रैव विरम्यत इति शम्।

*

## सन्दर्भाः

1. अमरकोशः, 1.6.2
2. पा.सू., 3.3.139
3. पा.सू., 3.3.156
4. अत्र द्वितीयायाः शक्त्या कर्मत्वरूपार्थस्यान्वयबोधे भानासम्भवाद् निरूढलक्षणयार्थाद् अनादितात्पर्यमूलकलक्षणयैव व्यापकत्वस्य द्वितीयार्थत्वेन प्रतीतिर्भवति।
5. पा.सू., 3.3.136
6. पा.सू., 3.3.140
7. अत्र यद्यपि भाष्यकृता कण्ठतोऽनिष्पत्तिरूपार्थो नोच्चारितस्तथापि ''लिङ्निमित्ते लृङ् क्रियातिपत्तौ'' (पा.सू. 3.3.139) इति सूत्रस्थः प्रदीप उद्द्योतश्च प्रमाणरूपेण स्वीकर्तुं शक्यते। तत्र तत्र व्याख्यानावसरे अतिपत्तेरनिष्पत्तिरिति निर्वचनं प्राप्यते।
8. ''साधनातिपत्तावपि'', महाभाष्यम्, ''लिङ्निमित्ते लृङ् क्रियातिपत्तौ।''
9. द्रष्टव्यम्, महाभाष्यम्, ''लिङ्निमित्ते लृङ् क्रियातिपत्तौ।''

*

**आरण्यकम्** (XXXI/2) **सितम्बर 2023**
**अर्धवार्षिकी सन्दर्भिता संस्कृतशोधपत्रिका** **( UGC Carelisted )**

## संस्कृतप्रसारपरिषद्, आरा

### प्रकाशनम्

1. मेघदूतम् (सभूमिका-हिन्दीपद्यानुवादसहितम्)
   - स्व. पण्डित कमलाकान्त उपाध्यायः
   15 रूप्यकाणि
2. भोजपुरी नीतिसतक (भर्तृहरि 'नीतिशतक'स्य भोजपुरी-पद्यानुवादः)
   -श्री देवकुमार मिश्रः 'अलमस्त'
   15 रूप्यकाणि
3. पण्डित दीनदयाल उपाध्याय के 'एकात्ममानवदर्शन' की मीमांसा
   - श्री नर्मदेश्वर ओझा
   15 रूप्यकाणि
4. माण्डूक्योपनिषद्-'नलिन-भाष्य' - पं. जगदीश्वर प्रसाद मिश्र 'नलिन'
   35 रूप्यकाणि
5. भरतचरितम् (महाकाव्यम्) - स्व. भवानीदत्त शर्मा
   51 रूप्यकाणि
6. राष्ट्रियता : सांस्कृतिक अवधारणा - श्री नर्मदेश्वर ओझा
   51 रूप्यकाणि
7. संस्कृतनिबन्धसञ्चयनम् - पं. व्रजभूषण मिश्र 'आक्रान्तः'
   41 रूप्यकाणि
8. ईशावास्योपनिषद् एवं केनोपनिषद्-'नलिन-भाष्य'
   - श्री जगदीश्वर प्रसाद मिश्र 'नलिन'
   51 रूप्यकाणि
9. आध्यात्मिकनिबन्धसंग्रह - श्री जगदीश्वर प्रसाद मिश्र 'नलिन'
   51 रूप्यकाणि
10. उपेन्द्रविज्ञानदर्शनम् (वेदान्तग्रन्थः) - स्व. पं. उपेन्द्रनारायणदत्त शर्मा
    41 रूप्यकाणि
11. भावनाविलासशतकम् - स्व. पं. उपेन्द्रनारायणदत्त शर्मा
    21 रूप्यकाणि
12. हनुमच्चरितम् - स्व. पं. व्रजभूषणमिश्र 'आक्रान्तः'
    51 रूप्यकाणि
13. उपनिषदों की भूमिका - पं. जगदीश्वर प्रसाद मिश्र 'नलिन'
    51 रूप्यकाणि
14. महाभारतसारसंग्रहः (प्रकाश्यः) - स्व. पण्डित वचन मिश्रः
15. चरितरत्नत्रयी - स्व. पं. व्रजभूषणमिश्र 'आक्रान्तः'
    51 रूप्यकाणि
16. जगन्नाथचरितम् - डॉ. बनमाली बिश्वालः
    60 रूप्यकाणि
17. कृत्-प्रत्ययविश्लेषण - डॉ. गोपबन्धु मिश्रः
    204 रूप्यकाणि